स्पर्शैलग्नं सपदि लभते हेमपद्वीं यथा रथ्यापायः शुचि भवति गङ्गौघमिलितम् । तथा तत्तत्पापैरतिमलिनमंतर्ममयदित्वयि प्रेम्णा सक्तं कथमिव न जायेत विमलम् ॥ १२ ॥ त्वदन्यस्मादिच्छाविषयफललोभेन नियमस्त्वमर्थानामिच्छाधिकमपि समर्था वितरणे । इति प्राहुः प्राञ्चः कमलभवनाद्यास्त्वयि मनस्त्वदासक्तं नक्तं दिवमुचितमीशानि कुरु तत् ॥ १३ ॥ स्फुरन्नानारत्नस्फटिकमयभित्तिप्रतिफलत्त्वदाकारं चञ्चच्छशधरविलासौघशिखरम् । मुकुन्दब्रह्मेन्द्रप्रभृतिपरिवारं विशयते तवागारं रम्यं त्रिभुवनमहाराजगृहिणि ॥ १४ ॥ निवासः कैलासे विशतमखाद्याः स्तुतिकराः कुटुंबं त्रैलोक्यं कृतकरपुटः सिद्धिनिकरः । महेशः प्राणेशस्तद्वनिधराधीशतनये न ते सौभाग्यस्य क्वचिदपि मनागस्ति तुलना ॥ १५ ॥ वृषो वृद्धो यानं विषमशनमाशा निवसनं श्मशानं क्रीडाभूर्भुजगनिवहो भूषणविधिः । समग्रासामग्री जगति विदितैव स्मररिपोर्यदेतस्यैश्वर्यंतव जननि सौभाग्यमहिमा ॥ १६ ॥ अशेषब्रह्मांडप्रलयविधिनैसर्गिकमतिः श्मशानेष्वासीनः कृतभसितलेपः पशुपतिः । दधौ कण्ठे हालाहलमखिलभूगोलकृपया भवत्याः संगत्या फलमिति च कल्याणिकलये ॥१७॥ त्वदीयं सौन्दर्यं निरतिशयमालोक्य परया भियैवासीद्गंगा जलमयतनुः शैलतनये । तदेतस्यास्ताम्यद्वदनकमलं वीक्ष्य कृपया प्रतिष्ठामातेने निजशिरसि वासेन गिरिशः ॥ १८ ॥ विशालश्रीखण्डद्रवमृगपदाकीर्णघुसृण प्रसूनव्यामिश्रं भगवति तवाभ्यंगसलिलम् । समादाय स्रष्टा चलितपदपांसून्निजकरैः समाधत्ते सृष्टिं विबुधपुरपंकेरुहदृशाम् ॥ १९ ॥ वसंते सानंदे कुसुमितलताभिः परिवृते स्फुरन्नानापद्मे सरसिकलहंसालिसुभगे । सखीभिः खेलंतीं मलयपवनांदोलितजलैः स्मरेद्यस्त्वांतस्य ज्वरजनितपीडाऽपसरति ॥ २० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमच्छंकराचार्यविरचिदानंदलहरी संपूर्णम् ।

## ३. महालक्ष्म्यष्टकस्तवः

श्रीगणेशाय नमः ॥ इन्द्र उवाच ॥ नमस्तेऽस्तु महामाये श्रीपीठे सुरपूजिते । शंखचक्रगदाहस्ते महालक्ष्मि नमोऽस्तु ते ॥१॥ नमस्ते गरुडारूढे कोलासुरभयंकरि । सर्वपापहरे देवि महालक्ष्मि० ॥ २ ॥ सर्वज्ञे सर्ववरदे सर्वदुष्टभयंकरि । सर्वदुःखहरे देवि महालक्ष्मि० ॥ ३ ॥ सिद्धिबुद्धिप्रदे देवि भुक्तिमुक्तिप्रदायिनि । मंत्रमूर्ते सदा देवि महालक्ष्मि० ॥ ४ ॥ आद्यंतरहिते देवि आद्यशक्ति महेश्वरि । योगजे योगसंभूते महालक्ष्मि० ॥५॥ स्थूलसूक्ष्ममहारौद्रे महाशक्ति महोदरे । महापापहरे देवि महालक्ष्मि० ॥ ६ ॥ पद्मासनस्थिते देवि परब्रह्मस्वरूपिणि । परमेशि जगन्मातर्महालक्ष्मि० ॥ ७ ॥ श्वेतांबरधरे देवि नानालंकारभूषिते । जगत्स्थिते जगन्मातर्महालक्ष्मि० ॥८॥ महालक्ष्म्यष्टकस्तोत्रं यः पठेद्भक्तिमान्नरः । सर्वसिद्धिमवाप्नोति राज्यं प्राप्नोति सर्वदा ॥९॥ एककालं पठेन्नित्यं महापापविनाशनम् । द्विकालं यः पठेन्नित्यं धनधान्यसमन्वितः ॥ १० ॥ त्रिकालं यः पठेन्नित्यं महाशत्रुविनाशनम् । महालक्ष्मीर्भवेन्नित्यं प्रसन्ना वरदा शुभा ॥ ११ ॥

इतीन्द्रकृतः श्रीमहालक्ष्म्यष्टकस्तवः संपूर्णः

---

## ४. देवकृतलक्ष्मीस्तोत्रम्

श्रीगणेशाय नमः ॥ क्षमस्व भगवत्यंब क्षमाशीले परात्परे । शुद्धसत्त्वस्वरूपे च कोपादिपरिवर्जिते ॥१॥ उपमे सर्वसाध्वीनां देवीनां देवपूजिते । त्वया विना जगत्सर्वं मृततुल्यं च निष्फलम् ॥ २ ॥ सर्वसम्पत्स्वरूपा त्वं सर्वेषां सर्वरूपिणी । रासेश्वर्यधिदेवी त्वं त्वत्कलाः सर्वयोषितः ॥ ३ ॥ कैलासे पार्वती त्वं च क्षीरोदे सिंधुकन्यका । स्वर्गे च स्वर्गलक्ष्मीस्त्वं मर्त्यलक्ष्मीश्च भूतले ॥ ४ ॥ वैकुण्ठे च महालक्ष्मीर्देवदेवी सरस्वती । गंगा च

तुलसी त्वं च सावित्री ब्रह्मलोकतः ॥ ५ ॥ कृष्णप्राणाधिदेवी त्वंगोलोके राधिका स्वयम् । रासे रासेश्वरी त्वं च वृन्दावनवने वने ॥ ६ ॥ कृष्णप्रिया त्वं भांडीरे चंद्रा चंदनकानने ।। विरजा चंपकवने शतशृंगे च सुन्दरी ॥ ७ ॥ पद्मावती पद्मवने मालती मालती वने । कुन्ददन्ती कुन्दवने सुशीला केतकीवने ॥ ८ ॥ कदंबमाला त्वं देवी कदंबकाननेऽपि च । राजलक्ष्मी राजगेहे गृहलक्ष्मी गृहे गृहे ॥ ९ ॥ इत्युक्त्वा देवताः सर्वे मुनयो मनवस्तथा । रुरुदुर्नम्रवदनाः शुष्ककंठोष्ठतालुकाः ।। १० ॥ इति लक्ष्मीस्तवं पुण्यं सर्वदेवैः कृतं शुभम् । यः पठेत्प्रातरुत्थाय स वै सर्वं लभेद् ध्रुवम्।।११॥अभार्यो लभते भार्यां विनीतां च सुतां सतीम् । सुशीलां सुंदरीं रम्यामतिसुप्रियवादिनीम् ॥ १२ ॥ पुत्रपौत्रवतीं शुद्धां कुलजां कोमलां वराम् ।। अपुत्रो लभते पुत्रं वैष्णवं चिरजीवनम् ।। १३ ॥ परमैश्वर्ययुक्तं च विद्यावंतं यशस्विनम् । भ्रष्टराज्यो लभेद्राज्यं भ्रष्टश्रीर्लभते श्रियम् ॥ १४ ॥ हतबन्धुर्लभेद्बंधुं धनभ्रष्टो धनं लभेत् । कीर्तिहीनो लभेत्कीर्तिं प्रतिष्ठां च लभेद् ध्रुवम् ॥ १५ ॥ सर्वमंगलदंस्तोत्रं शोकसंतापनाशनम् । हर्षानन्दकरं शश्वद्धर्ममोक्षसुहृत्प्रदम् ॥ १६ ॥

इति श्रीदेवकृतलक्ष्मीस्तोत्रं संपूर्णम्

---

## ५. त्रिपुरसुन्दरी स्तोत्रम्

श्रीगणेशाय नमः ॥ कदंबवनचारिणीं मुनिकदम्बकादंबिनीं नितंबजितभूधरां सुरनितंबिनीसेविताम् । नवांबुरुहलोचनामभिनवांबुदश्यामलां त्रिलोचनकुटुम्बिनीं त्रिपुरसुंदरीमाश्रये ॥ १ ॥ कदंबवनवासिनीं कनकवल्लकीधारणीं महार्हमणिहारणीं मुखसमुल्लसद्वारुणीम् । दयाविभवकारिणीं विशदलोचनीं चारिणीं त्रिलोचनकुटुंबिनीं त्रिपुरसुंदरीमाश्रये ॥ २ ॥ कदंबवनशालया कुचभरोल्लसन्मालया कुचोपमितशैलया गुरुकृपालसद्वेलया । मदा-

रुणकपोलया मधुरगीतवाचालया कयापि घननीलया कवचिता वयं लीलया ॥ ३ ॥ कदंबवनमध्यगां कनकमंडलोपस्थितां षडंबुरुह वासिनीं सततसिद्धसौदामिनीम्। विडंवितजपारुचिं विकचचंद्रचूडामणिं त्रिलोचनकुटुंबिनीं त्रिपुरसुंदरीमाश्रये ॥ ४ ॥ कुचांचितविपंचिका कुटिलकुंतलालंकृतां कुशेशयनिवासिनीं कुटिलचित्तविद्वेषिणीम्। मदारुणविलोचनां मनसिजारिसंमोहिनीं मतंग मुनिकन्यकां मधुरभाषिणीमाश्रये ॥ ५ ॥ स्मरेत्प्रथमपुष्पिणी रुधिरबिन्दुनीलांबरां गृहीतमधुपात्रिकां मधुविघूर्णनेत्रांचलाम्। घन स्तनभरोन्नतां गलितचूलिकां श्यामलां त्रिलोचनकुटुंबिनीं त्रिपुरसुंदरीमाश्रये ॥ ६ ॥ सकुंकुमविलेपनामलकचुंबिकस्तूरिकां समंद हसितेक्षणां सशरचापपाशांकुशाम्। अशेषजनमोहिनीमरुणमाल्यभूषांबरां जपाकुसुमभासुरां जपविधौ स्माराम्यंबिकाम् ॥ ७ ॥ पुरंदरपुरंध्रिकाचिकुरबंधसैरंध्रिकां पितामहपतिव्रतां पटुपटीरचर्चारताम् ॥ मुकुंदरमणीं मणीलसदलंक्रियाकारिणीं भजामि भुवनांबिकां सुरवधूटिकाचेटिकाम् ॥ ८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्य-
विरचितं त्रिपुरसुन्दरीस्तोत्रं संपूर्णम्

## ६. वाराहीनिग्रहाष्टकम्

श्रीगणेशाय नमः ॥ देवि क्रोडमुखि त्वदंघ्रकमलद्वंद्वानुरक्तात्मने मह्यं द्रुह्यति यो महेशि मनसा कायेन वाचा नरः। तस्याशु त्वदयोग्रनिष्ठुरहलाघातप्रभूतव्यथापर्यस्यन्मनसो भवंतु वपुषः प्राणाः प्रयाणोन्मुखाः ॥ १ ॥ देवित्वत्पदपद्मभक्तिविभवप्रक्षीण दुष्कर्मणि प्रादुर्भूतनृशंसभावमलिनां वृत्तिं विधत्ते मयि। यो देही भुवने तदीयहृदयान्निर्गत्वरैर्लोहितैः सद्यः पूरयसे कराब्जचषकं वांछाफलैर्मामपि ॥ २ ॥ चंडोत्तुंडविदीर्णदुष्टहृदयप्रोद्भिन्नरक्तच्छटाहालापानमदाट्टहासनिनदाटोपप्रतापोत्कटम्। मातार्मत्परिपंथिनामपहृतैः प्राणैस्त्वदंघ्रिद्वयंध्यानोद्दामरवैभवोदयव-

शात्संतर्पयामि क्षणात् ॥ ३ ॥ श्यामां तामरसाननांघ्रिनयनां सोमार्धचूडां जगत्त्राणव्यग्रहलायुधाग्रमुसलां संत्रासमुद्रावतीम् । ये त्वां रक्तकपालिनीं हरवरारोहे वराहाननां भावैः संदधते कथं क्षणमपि प्राणंति तेषां द्विषः ॥ ४ ॥ विश्वाधीश्वरवल्लभे विजयसे या त्वं नियंत्र्यात्मिका भूतानां पुरुषायुषावधिकरी पाकप्रदा कर्मणाम् । त्वां याचे भवतीं किमप्यवितथं को मद्विरोधी जनस्तस्यायुर्मम वांछितावधि भवेन्मातस्तवैवाज्ञया ॥ ५ ॥ मातः सम्यगुपासितुं जडमतिस्त्वां नैवशक्नोम्यहं यद्यप्यन्वितदैशिकांघ्रिकमलानुक्रोशपात्रस्य मे।जंतुःकश्चनचिंतयत्यकुशलं यस्तस्य तद्वैशसं भूयाद्देवि विरोधिनो मम च ते श्रेयः पदासंगिनः ॥६॥ वाराहि व्यथमानमानसलगत्सौख्यंतदाशावलिं सीदंतं यमपाकृताध्यवसितं प्राप्ताखिलोत्पादितम् । क्रंदद्बन्धुजनैः कलंकितकुलं कंठव्रणोद्यत्कृमिं पश्यामि प्रतिपक्षमाशु पतितं भ्रांतं लुठंतं मुहुः ॥ ७ ॥ वाराहि त्वमशेषजंतुषु पुनः प्राणात्मिका स्पंदसे शक्तिव्याप्तचराचरं खलु यतस्त्वामेतदभ्यर्थये । त्वत्पादांबुजसङ्गिनो मम सकृत्पापं चिकिर्षंति ये तेषां मा कुरु शंकरप्रियतमे देहान्तरावस्थितम् ॥ ८ ॥

इति श्रीवाराही निग्रहाष्टकं संपूर्णम्

---

## ७. वाराह्यनुग्रहाष्टकम्

श्रीगणेशाय नमः ॥ ईश्वर उवाच ॥ मातर्जगद्रचननाटकसूत्रधारः सद्रूपमाकलयितुं परमार्थतोयम् । ईशोप्यनीश्वरपदं समुपैति तादृक्कोऽन्यः स्तवं किमिव तावकमादधातु ॥ १ ॥ नामामि किं तु गृणतस्तव लोक तुण्डे नाडंबरं स्पृशतिदंडधरस्यदंड । यल्लेशलंबितभवांबुनिधिर्यतो यत्त्वन्नामसंस्मृतिरियं ननु न स्तुतिस्ते ॥ २ ॥ त्वच्चिंतनादरसमुल्लसदप्रमेयानंदोदयात्समुदितः स्फुटरोमहर्षः । मातर्नमामि सुदिनानि सदेत्यमुंत्वामभ्यर्थयेऽर्थमिति पूरयताद्दयालो ॥ ३ ॥ इन्द्रेन्दुमौलिविधिकेशव-

मौलिरत्नरोचिश्चयोज्ज्वलितपादसरोजयुग्मे। चेतो मतौ मम सदा प्रतिबिंबिता त्वं भूया भवानि विदधातु सदोरुहारे ॥ ४ ॥ लीलोद्धृतक्षितितलस्य वराहमूर्तेर्वाराहमूर्तिरखिलार्थकरी त्वमेव। प्रालेयरश्मिसुकलोल्लसितावतंसा त्वं देवि वामतनुभागहराहरस्य ॥५॥ त्वामंब तप्तकनकोज्ज्वलकांतिमंतर्ये चिंतयति युवतीतनुमागलांतम् । चक्रायुधत्रिनयांबरपोतृवक्त्रां तेषां पदांबुजयुगं प्रणमंति देवाः ॥ ६ ॥ त्वत्सेवनस्खलितपापचयस्य मातर्मोक्षोऽपि यत्र न सतांगणनामुपैति। देवसुरोरगनृपालनमस्यपादस्तत्र श्रियः पटुगिरः कियदेवमस्तु ॥ ७ ॥ किं दुष्करं त्वयि मनोविषयंगतायां किंदुर्लभं त्वयि विधानवदर्चितायाम्। किं दुष्करं त्वयि सकृत्स्मृतिभागतायां किं दुर्जयं त्वयि कृतस्तुतिवादपुंसाम् ॥८॥

इति श्रीवाराह्यनुग्रहाष्टकं संपूर्णम्

---

## ८. ताराष्टकम्

श्रीगणेशाय नमः। मातर्नीलसरस्वति प्रणमतां सौभाग्य संपत्प्रदे प्रत्यालीढपदस्थिते शिवहृदि स्मेराननां भोरुहे। फुल्लेन्दीवरलोचनत्रययुते कर्त्री कपालोत्पले खड्गं चादधती त्वमव शरणं त्वामीश्वरीमाश्रये ॥ १ ॥ वाचामीश्वरि भक्तकल्पलतिके सर्वार्थसिद्धिप्रदे गद्यप्राकृतपद्यजातरचना सर्वत्र सिद्धिप्रदे। नीलेन्दीवरलोचनत्रययुते कारुण्यवारांनिधे सौभाग्यामृतवर्षणेन कृपया सिंच त्वमस्मादृशम् ॥२॥ शर्वे गर्वसमूहपूरिततनो सर्पादिवेषोज्ज्वले व्याघ्रत्वक्परिवीतसुन्दरकटिव्याधूतघंटांकिते ॥ सद्यःकृत्तगलद्रजः परिमिलन्मुंडद्वयीमूर्धजग्रन्थिश्रेणिनृमुण्डदामललिते भीमे भयं नाशय ॥३॥ मायानगविकाररूपललनाबिंद्वर्धचंद्रात्मिके हुंफट्कारमयि त्वमेवशरणं मंत्रात्मिके मादृशः। मूर्तिस्ते जननि त्रिधामघटिता स्थूलाऽतिसूक्ष्मापरा वेदानां नहि गोचरा कथमपिप्राप्तां नु तामाश्रये ॥ ४ ॥ त्वत्पादांबुजसेवया सुकृतिनो

गच्छंति सायुज्यतां तस्य स्त्री परमेश्वरी त्रिनयनब्रह्मादिसाम्यात्मनः। संसारांबुधिमज्जने पटुतनून देवेंद्रमुख्यान्सुरान्मातस्त्वत्पदसेवने हि विमुखो या मन्दधीः सेवते ॥५॥ मातस्त्वत्पदपंकजद्वयरजोमुद्रांककोटीरिणस्ते देवाजयसंगरे विजयिनो निशं कमंके गताः। देवोऽहं भुवने न मे सम इतिस्पर्धां वहन्तः परे तत्तुल्यं नियतं यथाऽसुभिरमी नाशं व्रजंति स्वयम् ॥ ६ ॥ त्वन्नामस्मरणात्पलायनपरा द्रष्टुं च शक्ता न ते भूतप्रेतपिशाचराक्षसगणा यक्षाश्च नागाधिपाः। दैत्या दानवपुंगवाश्च खचरा व्याघ्रादिका जंतवो डाकिन्यः कुपितांतकाश्च मनुजं मातः क्षणं भूतले ॥७॥ लक्ष्मीः सिद्धगणाश्च पादुकमुखासिद्धास्तथा वारणः स्तंभश्चापि रणांगणे गजघटास्तंभस्तथा मोहनम्। मातस्त्वत्पदसेवया खलु नृणांसिद्ध्यंति ते ते गुणाः कांतिः कांतमनोभवस्य भवति क्षुद्रोऽपि वाचस्पतिः ॥ ८ ॥ ताराष्टकमिदं रम्यं भक्तिमान्यः पठेन्नरः। प्रातर्मध्याह्नकाले च सायाह्ने नियतः शुचिः ॥ ९ ॥ लभते कवितां दिव्यां सर्वशास्त्रार्थविद्भवेत्। लक्ष्मीमनश्वरां प्राप्तं भुक्त्वाभोगान्यथेप्सितान् ॥ १० ॥ कीर्तिं कांतिं च नैरुज्यं सर्वेषां प्रियतां व्रजेत। विख्यातिं चापि लोकेषु प्राप्यांते मोक्षमाप्नुयात् ॥ ११ ॥

इति नीलतंत्रे ताराष्टकं संपूर्णम्

---

## ९. शीतलाष्टकम्

श्रीगणेशाय नमः॥ अस्य श्रीशीतलास्तोत्रस्य महादेव ऋषिः। अनुष्टुप् छन्दः। शीतला देवता। लक्ष्मीर्बीजम् भवानी शक्तिः। सर्वविस्फोटकनिवृत्तये जपे विनियोगः। ईश्वर उवाच ॥ वंदेहं शीतलां देवीं रासभस्थां दिगंबराम्। मार्जनीकलशोपेतां शूर्पालंकृतमस्तकाम् ॥ १ ॥ वंदेऽहं शीतलां देवीं सर्वरोग भयापहाम्। यामासाद्य निवर्तेत विस्फोटकभयं महत् ॥ २ ॥ शीतले शीतले चेति यो ब्रूयाद्दाहपीडितः॥ विस्फोटकभयं घोरं क्षिप्रं तस्य प्रण-

श्यति ॥ ३ ॥ यस्त्वामुदकमध्ये तु धृत्वा पूजयते नरः । विस्फोटकभयं घोरं गृहे तस्य न जायत ॥ ४ ॥ शीतल ज्वरदग्धस्य पूतिगन्धमृतस्य च । प्रनष्टचक्षुषः पुंसस्त्वामाहुर्जीवनौषधम् ॥ ५ ॥ शीतल तनुजान्रोगान्नृणां हरसि दुस्त्यजान् । विस्फोटकविजीर्णानां त्वमेकाऽमृतवर्षिणी ॥ ६ ॥ गलगंडग्रहा रोगा ये चान्ये दारुणा नृणाम् । त्वदनुध्यानमात्रेण शीतले यांति संक्षयम् ॥ ७ ॥ न मन्त्रो नौषधं तस्य पापरोगस्य विद्यते । त्वामेकां शीतले धात्रीं नान्यां पश्यामि देवताम् ॥ ८ ॥ मृणालतंतुसदृशीं नाभिहृन्मध्यसंस्थिताम् ॥ यस्त्वां सञ्चिन्तयेद्देवि तस्य मृत्युर्न जायते ॥ ९ ॥ अष्टकं शीतलादेव्या यो नरः प्रपठेत्सदा । विस्फोटकभयं घोरं गृहे तस्य न जायते ॥ १० ॥ श्रोतव्यं पठितव्यं च श्रद्धाभक्तिसमन्वितः । उपसर्गविनाशाय परं स्वस्त्ययनं महत् ॥ ११ ॥ शीतले त्वं जगन्माता शीतले त्वं जगत्पिता । शीतले त्वं जगद्धात्री शीतलायै नमो नमः ॥ १२ ॥ रासभो गर्दभश्चैव खरो वैसाखनन्दनः । शीतलावाहनश्चैव दूर्वाकन्दनिकृन्तनः ॥ १३ ॥ एतानि खरनामानि शीतलाग्रे तु यः पठेत् । तस्य गेहे शिशूनां च शीतलारुङ्न जायते ॥ १४ ॥ शीतलाष्टकमेवेदं न देयं यस्य कस्यचित् । दातव्यं च सदा तस्मै श्रद्धाभक्तियुताय वै ॥ १५ ॥

इति श्रीस्कंदपुराणे शीतलाष्टकस्तोत्रं संपूर्णम् ।

## १०. अन्नपूर्णास्तोत्रम्

श्रीगणेशाय नमः ॥ नित्यानन्दकरी वराभयकरी सौन्दर्यरत्नाकरी निर्धूताखिलघोरपावनकरी प्रत्यक्षमाहेश्वरी । प्रलेयाचलवंशपावनकरी काशीपुराधीश्वरी भिक्षां देहि कृपावलंबनकरी मातान्नपूर्णेश्वरी ॥ १ ॥ नानारत्नविचित्रभूषणकरी हेमांबराडंबरी मुक्ताहारविलम्बमानविलसद्वक्षोजकुंभांतरी । काश्मीरागुरुवासिता रुचिकरी काशीपुराधीश्वरी भिक्षां देहि० ॥ २ ॥

योगानन्दकरी रिपुक्षयकरी धर्मार्थनिष्ठाकरी। चन्द्रार्कानलभासमानलहरी त्रैलोक्यरक्षाकरी । सर्वैश्वर्यसमस्तवांछितकरी काशीपुराधीश्वरी भिक्षां देहि० ॥३॥ कैलासाचलकंदरालयकरी गौरी उमा शङ्करी कौमारी निगमार्थगोचरकरी ॐ कारबीजाक्षरी। मोक्षद्वारकपाटपाटनकरी काशीपुराधीश्वरी भिक्षां देहि० ॥ ४ ॥ दृश्या दृश्यप्रभूतवाहनकरी ब्रह्मांडभांडोदरी लीला नाटकसूत्रभेदनकरीविज्ञानदीपांकुरी। श्रीविश्वेशमनः प्रसादनकरी काशीपुराधीश्वरी भिक्षां देहि० ॥ ५ ॥ उर्वी सर्वजनेश्वरी भगवती मातान्नपूर्णेश्वरी वेणीनीलसमानकुन्तलहरीनित्यान्नदानेश्वरी। सर्वानन्दकरी दशा शुभकरी काशीपुराधीश्वरी भिक्षां देहि० ॥ ६ ॥ आदि-क्षांतसमस्तवर्णनकरी शंभोस्त्रिभावाकरी काश्मीरी त्रिजलेश्वरी त्रिलहरी नित्यांकुरी शर्वरी। कामाकांक्षकरी जनोदयकरी काशीपुराधीश्वरी भिक्षां देहि० ॥ ॥ ७ ॥ देवी सर्वविचित्ररत्नरचिता दाक्षायणी सुन्दरी वामा स्वादुपयोधरप्रियकरी सौभाग्यमाहेश्वरी । भक्ताभीष्टकरी दशाशुभहरी काशीपुराधीश्वरी भिक्षां देहि० ॥ ८ ॥ चंद्रार्कानलकोटिकोटिसदृशा चन्द्रांशुबिम्बाधरी चन्द्रार्काग्निसमानकुन्तलधरीचन्द्रार्कवर्णेश्वरी । मालापुस्तकपाशसांकुशधरी काशीपुराधीश्वरी भिक्षां देहि० ॥ ९ ॥ क्षत्रत्राणकरी महाऽभयकरी माता कृपासागरी साक्षान्मोक्षकरी सदा शिवकरी विश्वेश्वरश्रीधरी। दक्षाक्रंदकरी निरामयकरी काशीपुराधीश्वरी भिक्षां देहि० ॥ १० ॥ अन्नपूर्णे सदापूर्णे शंकरप्राणवल्लभे । ज्ञानवैराग्यसिद्ध्यर्थं भिक्षां देहि च पार्वती ॥ ११ ॥ माता च पार्वती देवी पिता देवो महेश्वरः। बांधवाःशिवभक्ताश्च स्वदेशो भुवनत्रयम् ॥ १२ ॥

इति श्रीमच्छंकराचार्यविरचितमन्नपूर्णाष्टकस्तोत्रं संपूर्णम्

## ११. राधाकवचम्

श्रीगणेशाय नमः ॥ पार्वत्युवाच ॥ कैलासवासिन् भगवन् भक्तानुग्रहकारक । राधिकाकवचंपुण्यं कथयस्व मम प्रभो ॥ १ ॥ यद्यस्ति करुणा नाथ त्राहि मां दुःखतो भयात् । त्वमेव शरणं नाथ शूलपाणे पिनाकधृक् ॥ २ ॥ शिव उवाच ॥ शृणुष्व गिरिजे तुभ्यं कवचं पूर्वसूचितम् ॥ सर्वरक्षाकरंपुण्यं सर्वहत्याहरं परम् ॥ ३ ॥ हरिभक्तिप्रदं साक्षाद्भुक्तिमुक्तिप्रसाधनम् । त्रैलोक्याकर्षणं देविहरिसान्निध्यकारकम् ॥ ४ ॥ सर्वत्र जयदं देवि सर्वशत्रुभयावहम् ॥ सर्वेषां चैव भूतानां मनोवृत्तिहरं परम् ॥ ५ ॥ चतुर्धा मुक्तिजनकं सदानन्दकरं परम् । राजसूयाश्वमेधानां यज्ञानां फलदायकम् ॥ ६ ॥ इदं कवचमज्ञात्वा राधामंत्रं च यो जपेत् । स नाप्नोति फलं तस्य विघ्नास्तस्य पदे पदे ॥ ७ ॥ ऋषिरस्य महादेवोऽनुष्टुप्छंदश्च कीर्तितम् । राधास्य देवता प्रोक्ता रां बीजं कीलकं स्मृतम् ॥ ८ ॥ धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्तितः । श्रीराधा मे शिरः पातु ललाटं राधिका तथा ॥ ९ ॥ श्रीमती नेत्रयुगलं कर्णौ गोपेन्द्रनंदिनी । हरिप्रिया नासिकां च भ्रूयुगं शशिशोभना ॥ १० ॥ ओष्ठं पातु कृपादेवी अधरं गोपिका तथा । वृषभानुसुता दन्तांश्चिबुकं गोपनंदिनी ॥ ११ ॥ चंद्रावली पातुगण्डं जिह्वां कृष्णप्रिया तथा । कण्ठं पातु हरिप्राणा हृदयं विजया तथा ॥ १२ ॥ बाहू द्वौ चंद्रवदना उदरं सुबलस्वसा । कोटियोगान्विता पातु पादौ सौभद्रिका तथा ॥ १३ ॥ नखांश्चंद्रमुखी पातु गुल्फौ गोपालवल्लभा । नखान् विधुमुखी देवी गोपी पादतलं तथा ॥ १४ ॥ शुभप्रदा पातु पृष्ठं कुक्षौ श्रीकांतवल्लभा । जानुदेशं जया पातु हरिणी पातु सर्वतः ॥ १५ ॥ वाक्यं वाणी सदा पातु धनागारं धनेश्वरी । पूर्वां दिशं कृष्णरता कृष्णप्राणां च पश्चिमाम् ॥ १६ ॥ उत्तरां हरिता पातु दक्षिणां वृषभानुजा । चंद्रावली

नैशमेव दिवा क्ष्वेडितमेखला ॥ १७ ॥ सौभाग्यदा मध्यदिने सायाह्ने कामरूपिणी । रौद्री प्रातःपातु मां हि गोपिनी रजतीक्षये ॥ १८ ॥ हेतुदा संगवे पातु केतुमाला दिवार्धके । शेषऽपराह्णसमये शमिता सर्वसंधिषु ॥ १९ ॥ योगिनी भोगसमये रतौ रतिप्रदा सदा । कामेशी कौतुके नित्यं योगे रत्नावली मम ॥ २० ॥ सर्वदा सर्वकार्येषु राधिका कृष्णमानसा । इत्येतत्कथितं देवी कवचं परमाद्भुतम् ॥ २१ ॥ सर्वरक्षाकरं नाम महारक्षाकरं परम् । प्रातर्मध्याह्नसमये सायाह्ने प्रपठेद्यदि ॥ २२ ॥ सर्वार्थसिद्धिस्तस्य स्याद्यद्यन्मनसि वर्तते । राजद्वारे सभायां च संग्रामे शत्रुसंकटे ॥२३॥ प्राणार्थनाशसमये यः पठेत्प्रयतो नरः । तस्य सिद्धिर्भवेद्देवि न भयं विद्यते क्वचित् ॥ २४ ॥ आराधिता राधिका च तेन सत्यं न संशयः । गंगास्नानाद्धरेर्नामग्रहणाद्यत्फलं लभेत् ॥२५॥ तत्फलं तस्य भवति यः पठेत्प्रयतः शुचिः । हरिद्रारोचनाचन्द्रमण्डितं हरिचन्दनम् ॥ २६ ॥ कृत्वा लिखित्वा भूर्जे च धारयेन्मस्तके भुजे । कंठे वा देवदेवेशि स हरिर्नात्र संशयः ॥ २७ ॥ कवचस्य प्रसादेन ब्रह्मा सृष्टिं स्थितिं हरिः । संहारं नियतं चाहं करोमि कुरुते तथा ॥ २८ ॥ वैष्णवाय विशुद्धाय विरागगुणशालिने । दद्यात्कवचमव्यग्रमन्यथा नाशमाप्नुयात् ॥ २९ ॥

इतिश्रीनारदपंचरात्रे ज्ञानामृतसारे
राधाकवचं समाप्तम्

---

## १२. भगवत्यष्टकम्

श्रीगणेशाय नमः ॥ नमोऽस्तु ते सरस्वति त्रिशूलचक्रधारिणि सिताम्बरावृते शुभे मृगेन्द्रपीठसंस्थिते । सुवर्णबंधुराधरे सुझल्लरीशिरोरुहे सुवर्णपद्मभूषिते नमोस्तु ते महेश्वरि ॥ १ ॥ पितामहादिभिर्नुते स्वकांतिलुप्तचंद्रभे सरत्नमालयावृते भवाब्धिकष्टहारिणि । तमाल हस्तमंडिते तमालभालशोभिते गिरामगोचरे

हले नमोस्तु० ॥२॥ स्वभक्तवत्सलेऽनघे सदाऽपवर्गभोगदे दरिद्र-
दुःख हारिणि त्रिलोकशंकरीश्वरि । भवानि भीम अंबिके प्रचण्ड
तेजउज्ज्वले भुजाकलापमण्डिते नमोस्तु० ॥ ३ ॥ प्रपन्नभीति-
नाशिके प्रसूनमाल्यकंधरे धियस्तमोनिवारिके विशुद्धबुद्धिकारिके
सुरार्चितांघ्रिपंकजे प्रचंडविक्रमेऽक्षरे विशालपद्मलोचने नमोस्तु०
॥४॥ हतस्त्वया स दैत्यधूम्रलोचनो यदा रणे तदा प्रसूनवृष्टय-
स्त्रिविष्टपे सुरैः कृताः । निरीक्ष्य तत्र ते प्रभामलज्जत प्रभाकर-
स्त्वये दयाकरे ध्रुवे नमोस्तु० ॥ ५ ॥ ननाद केसरी यदा चचाल
मेदिनी तदा जगाम दैत्यनायकः स्वसेनया द्रुतं भिया । सकोपकं-
पदच्छदे सचण्डमुण्डघातिके मृगेन्द्रनादनादिते नमोस्तु० ॥६॥
कुचन्दनार्चितालके सितोष्णवारणाधरे सवर्करानने वरे निशुम्भ-
शुम्भमर्दिके । प्रसीदचण्डिके अजे समस्त दोषघातिके शुभे मति-
प्रदेऽचले नमोस्तु० ॥ ७ ॥ त्वमेव विश्वधारिणी त्वमेव सर्वहा-
रिणी न गम्यसेऽजितात्मभिः । दिवौकसां हिते रता करोषि दैत्य-
नाशनं शताक्षि रक्तदंतिके नमोस्तु० ॥ ८ ॥ पठंति ये समा-
हिता इमं स्तवं सदा नरा अनन्यभक्तिसंयुता अहर्मुखेऽनुवास-
रम् । भवंति ते तु पंडिताः सुपुत्रधान्यसंयुताः कलत्रभूतिसंयुता
व्रजंति चामृतं सुखम् ॥ ९ ॥

इति श्रीमद्रामदासपूज्यपादशिष्यश्रीमद्धंसदास-
शिष्येणामरदासाख्यकविना विरचितं
भगवत्यष्टकं समाप्तम्

---

## १३. संकटानामाष्टकम्

श्रीगणेशाय नमः ॥ ॐ नारद उवाच ॥ जैगीषव्य मुनि श्रेष्ठ
सर्वज्ञ सुखदायक । आख्यानानि सुपुण्यानि श्रुतानि त्वत्प्रसादतः
॥ १ ॥ न तृप्तिमधिगच्छामि तव वागमृतेन च । वदस्वैकं
महाभाग संकटाख्यानमुत्तमम् ॥ २ ॥ इति तस्य वचः श्रुत्वा
जैगीषव्योऽब्रवीत्ततः ॥ संकष्टनाशनं स्तोत्रं शृणुदेवर्षिसत्तम
॥ ३ ॥ द्वापरे तु पुरा वृत्ते भ्रष्टराज्यो युधिष्ठिरः । भ्रातृभिः

सहितो राज्यनिर्वेदं परमं गतः ॥ ४ ॥ तदानीं तु ततः काशीं पुरी यातो महामुनिः मार्कंडेय इति ख्यातः सह शिष्यैर्महायशाः ॥ ५ ॥ तं दृष्ट्वा स समुत्थाय प्रणिपत्य सुपूजितः । किमर्थं म्लानवदनं एतत्त्वं मां निवेदय ॥ ६ ॥ युधिष्ठिर उवाच ॥ संकष्टं मे महत्प्राप्तमेतादृग्वदनं ततः । एतन्निवारणोपायं किंचिद्ब्रूहि मुने मम ॥ ७ ॥ मार्कंडेय उवाच ॥ आनन्दकानने देवी संकटा नाम विश्रुता । वीरेश्वरोत्तरे भागे पूर्वं चंद्रेश्वरस्य च ॥ ८ ॥ नामाष्टकं शृणु तस्याः सर्वसिद्धिकरं नृणाम् ॥ ॥ संकटा प्रथमं नाम द्वितीयं विजया तथा ॥ ९ ॥ तृतीयं कामदा प्रोक्तं चतुर्थं दुःखहारिणी । शर्वाणी पंचमं नाम षष्ठं कात्यायनी तथा ॥ १० ॥ सप्तमं भीमनयना सर्वरोगहराऽष्टमम् । नामाष्टकमिदं पुण्यं त्रिसंध्यं श्रद्धयान्वितः ॥ ११ ॥ यः पठेत्पाठयेद्वापि नरो मुच्यते संकटात् । इत्युक्त्वा तु द्विजश्रेष्ठमृषिर्वाराणसीं ययौ ॥ १२ ॥ इति तस्य वचः श्रुत्वा नारदो हर्षनिर्भरः । ततः संपूजितां देवीं वीरेश्वरसमन्विताम् ॥ १३ ॥ भुजैस्तु दशभिर्युक्तां लोचनत्रयभूषिताम् । मालाकमंडलुयुतां पद्मशंखगदायुताम् ॥ १४ ॥ त्रिशूलडमरुधरां खड्गचर्मविभूषताम् । वरदामयहस्तां तां प्रणम्य विधिनन्दनः ॥ १५ ॥ वारत्रयं गृहीत्वा तु ततो विष्णुपुरं ययौ । एतत्स्तोत्रस्य पठनं पुत्रपौत्रविवर्धनम् ॥ १६ ॥ संकष्टनाशनं चैव त्रिषु लोकेषु विश्रुतम् ॥ गोपनीयं प्रयत्नेन महावंध्याप्रसूतिकृत ॥ १७ ॥

इति श्रीपद्मपुराणे संकटानामाष्टकं संपूर्णम्

---

## १४. लक्ष्मीलहरिः

श्रीगणेशाय नमः । समुन्मीलन्नीलांबुजनिकरनीराजितरुचामपांगानां भङ्गैरमृतलहरी श्रेणिमसृणैः । क्रियाहीनं दीनं भृशमुदरलीनं करुणया हरिश्यामा सा मामवतु जडसामाजिकमपि ॥ १ ॥ समुन्मीलत्वंतः करुणकरुणोद्गारचतुरः करिप्राणत्राणप्रणयिनि दृगन्तस्तवमयि । यमासाद्योन्माद्यद्द्विपनियुतगंडस्थल-

गलन्मदक्लिन्नद्वारो भवति सुखसारो नरपतिः ॥ २ ॥ उरस्यस्य भ्रश्यत्कबरभरनिर्यत्सुमनसः पतंति स्वर्बालाः स्मरशरपराधीनमनसः । सुरास्तं गायंति स्फुरिततनुगंगाधरमुखास्तवायं दृक्पातो यदुपरि कृपातो विलसति ॥ ३ ॥ समीपे संगीतस्वरमधुरभंगी मृगदृशां विदूरे दानांधद्विरदकलभोद्दामनिनदः । बहिर्द्वारे तेषां भवति हयहेषाकलकलो दृगेषा ते येषामुपरि कमले देवि सदया ॥ ४ ॥ अगण्यैरिन्द्राद्यैरपि परमपुण्यैः परिचितो जगज्जन्मस्थान प्रलयरचनाशिल्पनिपुणः । उदंचत्पीयूषांबुधिलहरिलीलामनुहरन्नपांगस्तेऽमन्दं मम कलुषवृन्दं दलयतु ॥५॥ नमन्मौलिश्रेणित्रिपुरपरिपथिप्रतिलसत्कपर्दव्यावृत्तिस्फुरितफणिफूत्कारचकितः । लसत्फुल्लांभोजम्रदिमहरणः कोऽपि चरणश्चिरं चेतश्चारी मम भवतु वारीशदुहितुः ॥ ६ ॥ प्रवालानां दीक्षागुरुरपि च लाक्षारुणरुचां नियंत्री बन्धूकद्युतिनिकरबंधूकृतिपटुः । नृणामंतर्ध्वांतं निविडमपहर्तुं तव किल प्रभातश्रीरेषा चरणरुचिवेषा विजयते ॥७॥ प्रभातप्रोन्मीलत्कमलवनसंचारसमये शिखाः किंजल्कानां विदधति रुजं यत्र मृदुलः । तदेतन्मातस्ते चरणमरुणश्लाघ्यकरुणं कठोरा मद्वाणी कथमियमिदानीं प्रविशतु ॥ ८ ॥ स्मितज्योत्स्नामज्जद्द्विजमणिमयूखामृत-झरैर्निषिञ्चन्तीं विश्वं तव विमलमूर्तिं स्मरति यः । अमंदं स्यंदन्ते वदनकमलादस्य कृतिनो त्रिविक्तौ वैकल्पाः सततमधिकल्पा नवगिरः ॥ ९ ॥ शरौ मायाबीजौ हिमकरकलाक्रांतशिरसौ विधायोर्ध्वं बिंदुं स्फुरितमिति बीजं जलधिजे । जपेद्यः स्वच्छन्द सहि पुनरमंदं गजघटामदभ्राम्यद्भृंगैर्मुखरयति वेश्मानि विदुषाम् ॥ १० ॥ स्मरो नामंनामं त्रिजगदभिरामं तव पदं प्रपेदे सिद्धिं यां कथमिव नरस्तां कथयतु । यया पातंपातं पदकमलयोः पर्वतचरो हरो हा रोषार्द्रामनुनयति शैलेंद्रतनयाम् ॥ ११ ॥ हरंतो निःशकं हिमकरकलानां रुचिरतां किरंतः स्वच्छंदं किरणमयपीयूषनिकरम् । विलुपंतु प्रौढा हरिहृदय

हाराःप्रियतमा ममांतस्संतापं तव चरणशोणांबुजनखा । ॥ १२ ॥ मिषान्माणिक्यानां विगलितनिमेषं निमिषताममन्दं सौंदर्यं तव चरणयोरंबुधिसुते । पदालंकाराणां जयति कलनिक्काणनपटुरुदं चन्तुदामः स्तुतिवचनलीलाकलकलः ॥ १३ ॥ मणिज्योत्स्नाजालैर्निजतनुरुचः मांसलतया जटालं ते जंघायुगलमघभङ्गाय भवतु । भ्रमन्ती यन्मध्ये दरदलितशोणांबुजरुचां दृशां माला नीराजनमिव विधत्ते मुररिपोः ॥ १४ ॥ हरद्गर्वं सर्वं करिपतिः कराणां मृदुतया भृशं भाभिर्दंभं कनकमयरंभावनिरुहाम् । लसज्जानुज्योत्स्नातरणिपरिणद्धं जलनिधे तवोरुद्वंद्वं नः श्लथयतु भयोरुज्वरभयम् ॥ १५ ॥ कलक्वाणां कांचीं मणिगणजटालामधिवहन्वसानः कौसुंभं वसनमसनं कौस्तुभरुचाम् । मुनिव्रातैः प्रातः शुचिवचनजातैरतिनुतं नितंबस्ते बिंबं हसति नवमंबांबरमणेः ॥१६। जगन्मिथ्याभूतं मम निगदतां वेदवचसामभिप्रायो नाद्यावधि हृदयमध्याविशदयम् । तदानीं विश्वेषां जनकमुदरं ते विमृशतो विसन्देहं चेतोऽजनि गरुडकेतोः प्रियतमे ॥१७॥ अनल्पैर्वादीन्द्रैरगणितमहायुक्तिनिवहैर्निरस्ता विस्तारं क्वचिदकलयंती तनुमपि । असत्ख्यातिव्याख्यादिकचतुरिमाख्यातमहिमा-वलग्ने लग्नेयं सुगतमतसिद्धान्तसरणिः ॥ १८ ॥ निदानं शृङ्गारप्रकरमकरंदस्य कमलं महानं वालंबो हरिनयनरोलंबवरयोः । निधानं शोभानां निधनमनुतापस्य जगतो जवेनाभीतिं मे दिशतु तव नाभीसरसिजम् ॥ १९ ॥ गभीरामुद्वेलां प्रथमरसकल्लोलमिलितां विगाढुं ते नाभीविमलसरसीं गौर्मम मनाक् । पदं धावन्यस्यत्यहह विनिमग्नैव सहसा नहि क्षेमं सूते गुरुमहिमसूतेष्वविनयः ॥ २० ॥ कुचौ ते दुग्धांभोनिधिकुलशिखामंडनमणेर्हरेते सौभाग्यं यदि पुरगिरेश्चित्रमिह किम् । त्रिलोकी लावण्याहरणनवलीलानिपुणयोर्ययोर्दत्ते भूयः करमखिलनाथो मधुरिपुः

॥ २१ ॥ हरक्रोधत्रस्यन्मदनवदुर्गद्वयतुलां दधत्कोकद्वंद्वद्युतिदमनदीक्षाधिगुरुताम् ॥ तवैतद्वक्षोजद्वितयमरविंदाक्षमहिले मम स्वांतध्वांतं किमपि च नितांतं गमयतु ॥ २२ ॥ अनेकब्रह्मांडस्थितिनियमलीलाविलसिते दयापीयूषांभोनिधिसहजसंवासभवने विधोश्चित्तायामे हृदयकमले ते तु कमले मनाङ्मन्निस्तारस्मृतिरपि च कोणे निवसतु ॥ २३ ॥ मृणालीनां लीलाः सहजलवणिम्नां लघयतां चतुर्णां सौभाग्यं तव जननि दोष्णां वदतु कः । लुठंति स्वच्छंदं मरकतशिलामांसलरुचः श्रुतीनां स्पर्धां ये दधत इव कंठे मधुरिपोः ॥ २४ ॥ अलभ्यं सौरभ्यं कविकुलनमस्या रुचिरता तथापि त्वद्धस्ते निवसदरविंदं विकसितम् । कलापे काव्यानां प्रकृतिकमनीयस्तुतिविधौ गुणोत्कर्षाधानं प्रथितमुपमानं समजनि ॥ २५ ॥ अनल्पं जल्पंतु प्रतिहतधियः पल्लवतुलां रसज्ञामज्ञानां क इव कमले मंथरयतु । तपन्तु श्रीभिक्षावितरणवशीभूतजगतां कराणां सौभाग्यं तव तुलयितुं तुंगरसनाः ॥ २६ ॥ समाहारः श्रीणां विरचितविहारो हरिदृशां परीहारो भक्तप्रभवभवसंतापसरणेः । प्रहारः सर्वासामपि च विपदां विष्णुदयिते ममोद्धारोपायं तव सपदि हारो विमृशतु ॥ २७ ॥ अलंकुर्वाणानां मणिगणघृणीनां लवणिमा यदीयाभिर्भाभिर्भजति महिमानं लघुरपि । सुपर्वश्रेणीनां जनितपरसौभाग्यविभवास्तवांगुल्यस्ता मे ददतु हरिवामेऽभिलषितम् ॥ २८ ॥ तपस्तेपे तीव्रं किमपि परितप्य प्रतिदिनं तव ग्रीवालक्ष्मीलवपरिचयादाप्तविभवम् । हरिः कंबुं चुंबत्यथ वहति पाणौ किमधिकं वदामस्तत्रायं प्रणयवशतोऽस्यै स्पृहयति ॥२९॥ अभेदप्रत्यूहःसकलहरिदुल्लासनविधिर्विलोनी लोकानां स हि नयनतापोऽपि कमले । तवास्मिन्पीयूषं किरति वदनेरम्यवदने कुतो हेतोश्चेतो विधुरयमुदेति स्म जलधेः ॥ ३० ॥ मुखांभोजे मंदस्मिधुरकांत्या विकसतां द्विजानां ते हीरावलिविहितनीराजनरुचाम् । इयं ज्योत्स्ना कापि

स्रवदमृतसंदोहसरसा ममोद्यद्दारिद्र्यज्वरतरुणतापं तिरयतु ॥ ॥ ३१ ॥ कुलैः कस्तूरीणां भृशमनिशमास्यमपि च प्रभातप्रोन्मीलन्नलिननिवहैरश्रुतचरम् । वहन्तः सौरभ्यं मृदुगतिविलासा मम शिवं तव श्वासा नासापुटविहितवासा विदधताम् ॥ ३२ ॥ कपोले ते दोलायितललितलोलालकवृते विमुक्ताह्लाम्मिल्लादसति मुक्तावलिरियम् । स्वकीयानां बंदीकृतमसहमानैरिव बलान्निबध्योर्ध्वंकृष्टा तिमिरनिकुरंबैर्विधुकसा ॥ ३३ ॥ प्रसादो यस्यायं नमदमितगीर्वाणमुकुटप्रसर्पज्ज्योत्स्नाभिश्चरणतलपीठार्चितविधिः दृगंभोजं तत्ते गतिहसितमत्तेभगमने वने लीनैर्दीनैः कथयकथमीयादिह तुलाम् ॥ ३४ ॥ दुरापा दुर्वृत्तैर्दुरितदमने दारणभरा दयार्द्रा दीनानामुपरि दलदिन्दीवरनिभा । दहंती दारिद्र्यद्रुमकुलमुदारद्रविणदा त्वदीया दृष्टिर्मे जननि दुरदृष्टं दलयतु ॥३५॥ तव श्रोत्रे फुल्लोत्पलसकलसौभाग्यजयिनी सदैव श्रीनारायणगुणगणौघप्रणयिनी । रवैर्दीनां लीनामनिशमवधानातिशयिनीं ममाप्येतां वाचं जलधितनये गोचरयताम् ॥ ३६ ॥ प्रभाजालैः प्राभातिकदिनकराभापनयनं तवेदं खेदं मे विघटयतु ताटंकयुगलम् । महिम्ना यस्यायं प्रलयसमयेऽपि क्रतुभुजां जगत्पायं पायं स्वपिति निरपायं तव पतिः ॥ ३७ ॥ निवासो मुक्तानां निबिडतरनीलांबुदनिभस्तवायं धम्मिल्लो विमलयतु मल्लोचनयुगम् । भृशं यस्मिन्कालागुरुबहुलसौरभ्यनिवहैः पतंति श्रीभिक्षार्थिन इव मदांधा मधुलिहः ॥ ३८ ॥ विलग्नौ ते पार्श्वद्वायपरिसरे मत्तकरिणौ करोन्नीतैरंचन्मणिकलशमुग्धास्यगलितैः । निषिंचंतौ मुक्तामणिगणचयैस्त्वां जनकर्णैर्नमस्यामो दामोदरगृहिणि दारिद्र्यदलिताः ॥३९॥ अये मातर्लक्ष्मि त्वदरुणपदांभोजनिकटे लुठंतं बालं मामविरलगलद्बाष्पजटिलम् । सुधासेकस्निग्धैरतिमसृणमुग्धैः करतलैः स्पृशंती मारोदीरिति वद समाश्वास्यसि कदा ॥ ४० ॥ रमे पद्मे लक्ष्मि प्रणजनतनकल्पद्रुमलते सुधांभोधेः पुत्रि त्रिदशनिकरोपा-

स्तच्चरणे । परे नित्यं मातर्गुणमयि परब्रह्म महिले जगन्नाथस्याकर्णय मृदुलवर्णावलिमिमाम ॥ ४१ ॥

इति पंडितराजश्रीजगन्नाथविरचिता लक्ष्मीलहरिः समाप्ता

## १५. अम्बाष्टकम्

श्रीगणेशाय नमः ॥ चेटी भवन्निखिलखेटीकदंबतरुवाटीषु नाकिपटलीकोटीरचारुतरकोटीमणीकिरणकोटी करंबितपदा। पाटीरगंधकुचशाटी कवित्वपरिपाटीमगाधिपसुता घोटीकुलादधिक धाटीमुदारमुखवीटीरसेन तनुताम् ॥ १ ॥ कूलातिगामिभयतूलावलिज्वलनकीला निजस्तुतिविधाकोलाहलक्षपितकालामरी कुशलकीलालपोषणनभाः स्थूला कुचे जलदनीला कचे कलितंलीला कदम्बविपिने शूलायुधप्रणतिशीला विभातु हृदि शैलाधिराजतनया ॥ २ ॥ यत्राशयो लगति तत्रागजा वसतु कुत्रापि निस्तुलशुका सुत्रामकालमुखसत्राशनप्रकारसुत्राणकारिचरणा । छत्रानिलातिरयपत्राभिरामगुणमित्रामरीसमवधूः कुत्रासहन्मणिविचित्राकृतिःस्फुरितपुत्रादिदाननिपुणा ॥ ३ ॥ द्वैपायन प्रभृतिशापायुधत्रिदिवसोपानधूलिचरणा पापापहस्वमनुजापानुलीन--जनतापापनोद--निपुणा । नीपालयासुरभिधूपालका दुरितकूपादुदंचयतु मां रूपाधिका शिखरिभूपालवशमणिदीपायिता भगवती ॥ ४ ॥ यालीभिरात्मतनुताली सकृत्प्रियकपालीषु खेलति भयव्याली नकुल्यसितचूलीभरा चरणधूलीलसन्मुनिवरा । बालीभृति श्रवसि तालीदलं वहति यालीकशोभितिलका साली करोतु मम काली मनः स्वपदनालीकसेवनविधौ ॥ ५ ॥ न्यङ्काकरे वपुषि कंकादिरक्तपुषि कंकादिपक्षिविषये त्वं कामनामयसि किं कारणं हृदयपंकारिमेहि गिरजाम्। शंकाशिरानिशितटंकायमानपदसंकाशमानसुमनोझंकारिमानतति मंकानुपेतशशिसंकाशिवक्त्रकमलाम् ॥६॥ कुंबावतीसमविडंबागलेन नवतुंबाभवीणसविधा शंबाहुलेयशशिबिंबाभिराममुखसंबाधितस्तनभरा । अंबा कुरंगमदजंबालरोचिरिह लम्बालका

दिशतु मे बिंबाधरा विनतशंबायुधादिनकुरंबा कदंबविपिने ॥७॥ इन्धानकीरमणिबन्धा भवे हृदयबन्धावतीवरसिका सन्धावती भुवनसंधारणेऽप्यमृतसिंधावुदारनिलया । गन्धानुभानमुहुरंधालिवीताकचवन्धा समर्पयतु मे शंधाम भानुमपि सन्धानमाशुपदसन्धानमप्यगसुता ॥ ८ ॥

इति श्रीशंकराचार्यविरचितमंबाष्टकं समाप्तम् ।

---

## १६. श्रीस्तोत्रम्

श्रीगणेशाय नमः ॥ पुष्कर उवाच ॥ राजलक्ष्मीस्थिरत्वाय यथेन्द्रेण पुरा श्रियः । स्तुतिः कृता तथा राजाजयार्थं स्तुतिमाचरेत् ॥ १ ॥ इन्द्र उवाच ॥ नमस्ते सर्वलोकानां जननीमब्धिसंभवाम् । श्रियमुन्निद्रपद्माक्षीं विष्णुवक्षःस्थलस्थिताम् ॥ २ ॥ त्वं सिद्धिस्त्वंस्वधा स्वाहा सुधा त्वं लोकपावनी । सन्ध्या रात्रिः प्रभा भूतिर्मेधाश्रद्धा सरस्वती ॥३॥ यज्ञविद्या महाविद्या गुह्यविद्या च शोभने । आत्मविद्या च देवि त्वं विमुक्तफलदायिनी ॥ ४ ॥ आन्वीक्षिकी त्रयी वार्ता दण्डनीतिस्त्वमेव च । सौम्यासौम्यैर्जगद्रूपैस्त्वयैतद्देवि पूरितम् ॥ ५ ॥ का त्वन्या त्वामृते देवि सर्वयज्ञमयं वपुः । अध्यास्ते देवदेवस्य योगिचिंत्यं गदाभृतः ॥ ६ ॥ त्वया देवि परित्यक्तं सकलं भुवनत्रयम् । विनष्टप्रायमभवत् त्वयेदानीं समेधितम् ॥७॥ दाराःपुत्रास्तथाऽगारं सुहृद्धान्यधनादिकम् । भवत्येतन्महाभागे नित्यं त्वद्वीक्षणान्नृणाम् ॥ ८ ॥ शरीरारोग्यमैश्वर्यमरिपक्षक्षयः सुखम् । देवि त्वद्दृष्टिदृष्टानां पुरुषाणां न दुर्लभम् ॥ ९ ॥ त्वमंबा सर्वलोकानां देवदेवो हरिः पिता । त्वयैतद्विष्णुनाचांब जगद्व्याप्तं चराचरम् ॥ १० ॥ मा नः कोशं तथा गोष्ठं मा गृहं मा परिच्छदम् । मा शरीरं कलत्रं च त्यजेथाः सर्वपावनि ॥ ११ ॥ मा पुत्रान्मा सुहृद्वर्गान् मा पशून्मा विभूषणम् ॥ त्यजेथा मम देवस्य विष्णोर्वक्षःस्थलालये ।

॥ १२ ॥ सत्त्वेन सत्यशौचाभ्यां तथा शीलादिभिर्गुणैः ।
त्यज्यंते ते नराः सद्यः संत्यक्ता ये त्वयाऽमले ॥ १३ ॥
त्वयावलोकिताः सद्यः शीलाद्यैरखिलैर्गुणैः । कुलैश्वर्यैश्च
युज्यंते पुरुषा निर्गुणा अपि ॥ १४ ॥ स श्लाघ्यः स गुणी
धन्यः स कुलीनः स बुद्धिमान् । स शूरः स च विक्रांतो
यस्त्वया देवि वीक्षितः ॥ १५ ॥ सद्यो वैगुण्यमायांति
शीलाद्याः सकलगुणाः । पराङ्मुखी जगद्धात्री यस्य त्वं
विष्णुवल्लभे ॥ १६ ॥ न ते वर्णयितुं शक्ता गुणान् जिह्वापि
वेधसाः । प्रसीद देवि पद्माक्षि नास्मांस्त्याक्षीः कदाचन
॥ १७ ॥ पुष्कर उवाच ॥ एवं स्तुता ददौ श्रीश्च वरमिंद्राय
चेप्सितम् । सुस्थिरत्वं च राज्यस्य संग्रामविजयादिकम् ।
॥ १८ ॥ स्तोत्रं तु पाठश्रवणकर्तृणां भुक्ति मुक्तिदम् ।
श्रीस्तोत्रं सततं तस्मात्पठेच्च शृणुयान्नरः ॥ १९ ॥

इति श्रीअग्निपुराणांतर्गतं श्रीस्तोत्रं समाप्तम्

---

## १७. इन्द्राक्षीस्तोत्रम्

श्रीगणेशाय नमः ॥ ॐ अस्य श्रीन्द्राक्षी स्तोत्रमन्त्रस्य सहस्राक्ष ऋषिः । इन्द्राक्षी देवता । अनुष्टुप् छन्दः । महालक्ष्मीः बीजम् । भुवनेश्वरीति शक्तिः ॥ भवानीति कीलकम् । ॐ श्रीं ह्रीं क्लीं इति बीजानि । मम सर्वाभीष्टसिद्ध्यर्थे श्रीमदिन्द्राक्षीस्तोत्रजपे विनियोगः ॥ ॐ इन्द्राक्षी इत्यंगुष्ठाभ्यां नमः ॥ ॐ महालक्ष्मीरिति तर्जनीभ्यां नमः ॥ ॐ माहेश्वरीति मध्यमाभ्यां नमः ॥ ॐ अम्बुजाक्षीत्यनामिकाभ्यां नमः ॥ ॐ कात्यायनीति कनिष्ठिकाभ्यां नमः ॥ ॐ कौमारीति करतलकर पृष्ठाभ्यां नमः ॥ ॥ ॐ इन्द्राक्षीति हृदयाय नमः ॐ महालक्ष्मीरिति शिरसे स्वाहा ॥ ॐ माहेश्वरीति शिखायै

वौषट् । ॐ अम्बुजाक्षीति कवचाय हुम् ॥ ॐ कात्याय-
नीति नेत्रत्राय वौषट् । ॐ कौमारीत्यस्त्रायफट् ॥ ॐ
भूर्भुवः स्वरोम् इति दिग्बन्धनम् ॥ पूर्वस्यां पातु मां
ब्राह्मी चाग्नेय्यां तु महेश्वरी ॥ कौमारी पातु याम्ये वै
नैर्ऋत्यां पातु भैरवी ॥ १ ॥ पश्चिमे पातु वाराही
वायव्ये नारसिंहिका ॥ कालरात्रिरुदीच्यां वा ऐशान्यां
सर्वशक्तिधृक् ॥ २ ॥ ऊर्ध्वं मे भैरवी पातु चाधस्थं
विंध्यवासिनी ॥ यद्यद्विषमस्थानं तत्तद्रक्षतु चेश्वरी ॥ ३ ॥
अथ ध्यानम् ॥ इन्द्राक्षीं द्विभुजां देवीं पीतवस्त्रद्वयान्विताम् ॥
वामहस्ते वज्रधरां दक्षिणेन वरप्रदाम् ॥ १ ॥ इन्द्राक्षीं
युवतीं देवीं नानालंकारभूषिताम् ॥ प्रसन्नवदनाम्भोजाम-
प्सरोगणसेविताम् ॥ २ ॥ द्विभुजां सौम्यवदनां पाशांकुशधरां
पराम् ॥ त्रैलोक्यमोहिनीं देवीमिंद्राक्षीनामकीर्तिताम् ॥ ३ ॥
अथ मन्त्रः ॥ ॐ ऐं ह्रीं श्रीं क्लीं क्लुं इन्द्राक्ष्यैः नमः ॥ इन्द्र
उवाच ॥ इन्द्राक्षी नाम सा देवी दैवतः समुदाहृता ॥ गौरी
शाकंभरी देवी दुर्गानाम्नीति विश्रुता ॥ ४ ॥ कात्या-
यनी महादेवी चन्द्रघण्टा महातपा ॥ सावित्री स च
गायत्री ब्रह्माणी ब्रह्मवादिनी ॥ ५ ॥ नारायणी भद्रकाली
रुद्राणी कृष्णपिंगला ॥ अग्निज्वाला रौद्रमुखा कालरा-
त्रिस्तपस्विनी ॥ ६ ॥ मेघश्यामा सहस्राक्षी मुक्तकेशी
जलोदरी ॥ महादेवी मुक्तकेशी घोररूपा महाबला ॥ ७ ॥
अजिता भद्रदा नन्दा रोगहंत्री शिवप्रिया ॥ शिवदूती
कराली च प्रत्यक्षा परमेश्वरी ॥ ८ ॥ सदा सम्मोहिनी
देवी सुन्दरी भुवनेश्वरी ॥ इन्द्राक्षी इन्द्ररूपा च इन्द्रशक्तिः
परायणा ॥ ९ ॥ महिषासुरसंहर्त्री चामुण्डा गर्भदेवता ॥
वाराही नारसिंही च भीमा भैरवनादिनी ॥ १० ॥ श्रुति

स्मृतिधृतिर्मेधा विद्या लक्ष्मीः सरस्वती ॥ अनन्ता विजया पूर्णा मानस्तोकाऽपराजिता ॥ ११ ॥ भवानी पार्वती दुर्गा हैमवत्यम्बिका शिवा ॥ एतैर्नामिशतैर्दिव्यैः स्तुता शक्रेण धीमता ॥ १२ ॥ आयुरारोग्यमैश्वर्यं वित्तं ज्ञानं यशो बलम् ॥ नाभिमात्रजले स्थित्वा सहस्रपरिसंख्यया ॥ १३ ॥ जपेत्स्तोत्रमिमं मन्त्रं वाचां सिद्धिर्भवेत्ततः ॥ अनेन विधिना भक्त्या मन्त्रसिद्धिश्च जायते ॥ १४ ॥ सन्तुष्टा च भवेद्देवी प्रत्यक्षा सम्प्रजायते ॥ शतमावर्तयेद्यस्तु मुच्यते नात्र संशयः ॥ १५ ॥ आवर्तनसहस्रेण लभ्यते वाञ्छितं फलम् ॥ सायं शतं पठेन्नित्यं षण्मासात्सिद्धिरुच्यते ॥ १६ ॥ चोरव्याधिभयस्थाने मनसा ह्यनुचिन्तयन् ॥ संवत्सरमुपाश्रित्य सर्वकामार्थसिद्धये ॥ १७ ॥ राजानं वश्यमाप्नोति षण्मासान्नात्र संशयः ॥ १८ ॥

इति श्रीन्द्राक्षीस्तोत्रं संपूर्णम्

---

## १८. भवानीभुजंगस्तोत्रम्

श्रीगणेशाय नमः ॥ षडाधारपंकेरुहांतर्विराजत्सुषुम्नांतरालेऽतितेजोल्लसंतीम् । सुधामंडलं द्रावयंतीं पिबंतीं सुधामूर्तिमीडेऽहमानंदरूपाम् ॥ १ ॥ ज्वलत्कोटिबालार्कभासारुणांगीं सुलावण्यशृंगारशोभाभिरामाम् । महापद्मकिंजल्कमध्ये विराजत्त्रिकोणोल्लसंतीं भजे श्रीभवानीम् ॥ २ ॥ क्वणत्किंकिणीनूपुरोद्भासिरत्नप्रभालीढलाक्षार्द्रपादारविंदाम् । अजेशाच्युताद्यैः सुरैः सेव्मानां महादेवि मन्मूर्ति ते भावयामि ॥ ३ ॥ शुचोर्णांबराबद्धनीवीविराजन्महारत्नकांचीकलापं नितंबम् । स्फुरद्दक्षिणावर्तनाभिं च तिस्रो वली रम्यते रोमराजीं भजेऽहम् ॥ ४ ॥ लसद्वृत्तमुत्तंगमाणिक्यकुम्भोपमश्रीस्तनद्वंद्वमंबांबुजाक्षीम् । भजे पूर्णदुग्धाभिरामं तवेदं महाहारदीप्तं सदा प्रस्नुतास्यम् ॥५॥ शिरीषप्रसूनोल्ल-

लद्बाहुदंडैर्ज्वलद्बाणकोदंडपाशांकुशैश्च । चलत्कंकणोदार
केयूरभूषाज्वलद्भिः स्फुरंतीं भजे श्रीभवानीम् ॥ ६ ॥ शरत्पू
र्णचंद्रप्रभापूर्णबिंबाधरस्मेरवक्त्रारविंदश्रियंते । सुरत्नावली
हारताटंकशोभां भजे सुप्रसन्नामहं श्रीम० ॥ ७ ॥ सुनासापुट
पद्मपत्रायताक्षं यजंतः श्रियं दानदक्षं कटाक्षम् । ललाटोल्ल
सद्गंधकस्तूरिभूषोज्ज्वलद्भिः स्फुरंतीं भजे श्रीम० ॥ ८ ॥
चलत्कुंडलांते भ्रमद्भृङ्गवृन्दाघनस्निग्धधम्मिल्लभूषोज्वलंतीम्
स्फुरन्मौलिमाणिक्यमध्येंदुरेखाविलासोल्लसद्दिव्यमूर्धानमीडे९
॥ ९ ॥ स्फुरत्त्वांब बिंबस्य मे हृत्सरोजे सदा वाङ्मयं सर्वतेजो
मयं च इति श्रीभवानीस्वरूपं तदेवं प्रपंचात्परं चातिसूक्ष्मं
प्रसन्नम् ॥ १० ॥ गणेशाणिमाद्याखिलैः शक्तिवृन्दैः स्फुरच्छ्री
महाचक्रराजोल्लसंतीम् । परां राजराजेश्वरीं त्वां भवानी
सिवांकोपरिस्थां शिवां भावयेऽहम् ॥ ११ ॥ त्वमर्कस्त्वमग्नि
स्त्वमिंदुस्त्वमापस्त्वमाकाशभूवायवस्त्वं जिदात्मा । त्वदन्यो
न कश्चिप्रवाशोऽस्ति सर्वं सदानंदसंवित्स्वरूपं तवेदम्
॥१२॥गुरुस्त्वं च शक्तिःबुद्धिस्त्वमेव त्वमेवासि माता पिताऽसि
त्वमेव । त्वमेवासि विद्या त्वमेवासि बुद्धिर्गतिर्मे मतिर्देवि
सर्वं त्वमेव ॥ १३ ॥ श्रुतीनामगम्यं सुवेदागमाद्यैर्महिम्नो
न जानाति पारं तवेदम् । स्तुतिं कर्तुमिच्छामि ते त्वं भवानि
क्षमस्वेदमंब प्रमुग्धः किलाहम् ॥ १४ ॥ शरण्ये वरण्ये
सुकारुण्यपूर्णे । हिरण्योदराद्यैरगम्येऽतिपुण्ये । भवारण्यभीतं
च मां पाहि भद्रे नमस्ते नमस्ते भवानि नमस्ते ॥ १५ ॥ इमाम
न्वहं श्रीभवानीभुजंगस्तुतिं यः पठेच्छ्रोतुमिच्छेत तस्मै ॥ स्वकीयं
पदं शाश्वतं चैव सारं श्रियं चाष्टाद्धीश्च देवी ददाति ॥१६॥

इति श्रीमच्छं० वि० भवानीभुजंगस्तोत्रं संपूर्णम्

## १९. श्रेयस्करीस्तोत्रम्

श्रीः श्रेयस्करि श्रमनिवारिणी विद्धविद्ये स्वानन्दपूर्णे

ऽदेव करुणातनो मे । चित्ते वस प्रियतमेन शिवेन सार्धं
ाङ्गल्यमातनु सदैव मुदैव मातः ॥ १ ॥ श्रेयस्करि श्रित-
नोद्धरणैकदक्षे दाक्षायणि क्षपितपातकतूलराशे । शर्म-
यपादयुगले जलजप्रमोदे मित्रे त्रयीप्रसृमरे रमतां मनो
॥ २ ॥ श्रेयस्करि प्रणतपामरपारदानज्ञानप्रज्ञानप्रदानसर-
श्रितपादपीठे । श्रेयांसि सन्ति निखिलानि सुमङ्गलानि
त्रैव मे वसतु मानसराजहंसः ॥ ३ ॥ श्रेयस्करीति तव
ाम गृणाति भक्त्या श्रेयांसि तस्य सदने च करी पुर-
तात् । किं किं न सिद्ध्यति सुमङ्गलनाममालां धृत्वा
ुखं स्वपिति शेवतनौ रमेश ॥ ४ ॥ श्रेयस्करीति वरदेति
ापरेति वेदोदरेति विधिशंकरपूजितेति । वाणीति शंभु-
णीति च तारिणीति श्रीदेशिकेन्द्रकरुणेति गृणामि नित्यम्
५ ॥ श्रेयस्करि प्रकटमेव तवाभिधानं यत्रास्ति तत्र
िवत्प्रथमानवीर्यम् । ब्रह्मेन्द्ररुद्रमरुदादिगृहाणि सौख्यः
र्णानि नाममहिमा प्रथितस्त्रिलोक्याम् ॥ ६ ॥ श्रेयस्करि
णतवत्सलता त्वयीति वाचं शृणुष्व सरलां सरसां च सत्याम् ।
क्त्या नतोऽस्मि विनतोऽस्मि सुमङ्गले त्वत्पादाम्बुजे प्रणिहिते
यि संनिधत्स्व ॥ ७ ॥ श्रेयस्करीचरणसेवनतत्परेण कृष्णेन
क्षुवपुषा रचितं पठेद्यः । तस्य प्रसीदति सुरारिविमर्दनीय-
म्बा तनोति सदनेषु सुमङ्गलानि ॥ ८ ॥ यथामतिकृतस्तुतौ
दमुपैति मात न किं यथाविभवदानतो मुदमुपैति पात्रं न
म् । भवानि तव संस्तुतिं विरचितुं न चाहं क्षमस्तथापि
ेष्यसि प्रदिशसीष्टमम्ब त्वरात् ॥ ९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यकृष्णानन्दसरस्वतीविरचितं
श्रेयस्करीसुमङ्गलस्तोत्रं समाप्तम्

---

## २०. देवीषट्कम्

श्रीगणेशाय नमः अम्ब शशिबिम्बवदने कम्बुग्रीवे

कठोरकुचकुम्भे । अम्बरसमानमध्ये शम्बररिपुवैरिदेवि मां पाहि ॥ १ ॥ कुन्दमुकुलाग्रदन्ता कुंकुमपङ्केन लिप्तकुचभाराम् । आनीलनीलदेसामम्बामखिलाण्डनायकीं वन्दे ॥ २ ॥ सरिगमपधनिसतान्तांवीणासंक्रान्तचारुहस्तांताम् । शान्तां मृदुलस्वान्तः कुचभरतान्तां नमामि शिवकान्ताम् ॥ ३ ॥ अरटतघटितजुटीताडिततालीकपारताटङ्काम् । वीणा वादनवेलाकम्पितशिरसं नमामिमातङ्गीम् ॥ ४ ॥ शीणारसानुषङ्गं विकचमदामोदमाधुरी भृङ्गम् । करुणापूरितरङ्ग कलये मातङ्गन्यकापाङ्गम् ॥ ५ ॥ दयामानदीर्घनयनां देशिकरूपेण दर्शिताभ्युदयाम् वामकुचनिहितवीणां वरदां सङ्गीतमातृकां वन्दे ॥ ६ ॥ माणिक्यवीणामुपलालयन्तीं मदालसां मञ्जुलवाग्विलासाम् । मान्हेद्रनीलाद्युतिकोमलाङ्गीं मातङ्गकन्यां मनसा स्मरामि ॥ ७ ॥

इतिश्रीकालिकायां देवीषट्कं समाप्तम्

---

## २१. दुर्गापदुद्धारस्तोत्रम्

श्रीगणेशाय नमः ॥ ॥ नमस्ते शरण्ये शिवे सानुकम्पे नमस्ते जगद्व्यापिके विश्वरूपे । नमस्ते जगद्वन्द्यपादारविन्दे नमस्ते जगत्तारिणि त्राहि दुर्गे ॥ १ ॥ नमस्ते जगच्चिन्त्यमानस्वरूपे नमस्ते महायोगिनि ज्ञानरूपे । नमस्ते नमस्ते सदानन्दरूपे नमस्ते ॥ २ ॥ अनाथस्य दीनस्य तृष्णातुरस्य भयार्तस्य भीतस्य बद्धस्य जन्तोः । त्वमेका गतिर्देवि निस्तारकर्त्री नम० ॥ ३ ॥ अरण्ये रणे दारुणे शत्रुमध्येऽनले सागरे प्रान्तरे राजगेहे । त्वमेका गतिर्देवि निस्तारनौका नम० ॥ ४ ॥ अपारे महादुस्तरेऽत्यन्तघोरे विपत्सागरे मज्जतां देहभाजाम् । त्वमेका गतिर्देवि निस्तारहेतुर्नम० ॥ ५ ॥ नमश्चण्डिके चण्डदुर्दण्डलीलासमुत्खण्डिताखण्डिताशेषशत्रो । त्वमेका गतिर्देवि निस्तारबीजं नम० ॥ ६ ॥

त्वमेवाघभावधृतासत्यवादीर्न जाताजिताक्रोधनात् क्रोध-
निष्ठा ।। इडा पिङ्गला त्वं सुषुम्ना च न नाडी नम० ॥ ७ ॥
नमो देवि दुर्गे शिवे भीमनाद सरस्वत्यरुन्धत्यमोघस्वरूपे ।
विभूतिः शची कालरात्रिः सती त्वं नम० ॥ ८ ॥ शरणमसि
सुराणां सिद्धविद्याधराणां मुनिमनुजपशूनां दस्युभिस्त्रा-
सीतानाम् । नृपतिगृहगतानां व्याधिभिः पीडितानां त्वमसि
शरणमेका देवि दुर्गे प्रसीद ॥ ९ ॥ इदं स्तोत्रं मया प्रोक्त-
मापपदुद्धारहेतुकम् । त्रिसंध्यमेकसंध्यं वा पठनाद्घोरसंकटात्
॥ १० ॥ मुच्यते नात्र संदेहो भुवि स्वर्गे रसातले । सर्वं
वा श्लोकमेकं वा यः पठेद्भक्तिमान् सदा ॥ ११ ॥ स सर्वं
दुष्कृतं त्यक्त्वा प्राप्नोति परमं पदम् । पठनादस्य देवेशि
किं न विद्धयति भूतले ॥ १२ ॥ स्तवरादमिदं देवि
संक्षेपात्कथितं मया ।। १३ ॥

इति श्रीसिद्धेश्वरीतंत्रे उमामहेश्वरसंवादे श्रीदुर्गापदुद्धारस्तोत्रम्

---

## २२. गायत्रीस्तोत्रम् (१)

नारद उवाज ॥ ॥ भक्तानुकंपिन् सर्वज्ञ हृदयं पापना-
शनम् ॥ गायत्र्या कथितं तस्माद्गायत्र्याः स्तोत्रमीरय
॥ १ ॥ श्रीनारायण उवाच ॥ आदिशक्ते जगन्मातर्भक्ता-
नुग्रहकारिणि ॥ सर्वत्र व्यापिकेऽनंते श्रीसंध्ये ते नमोऽस्तु
ते ॥ २ ॥ त्वमेव संध्या गायत्री सावित्री च सरस्वती ॥ ब्राह्मी
च वैष्णवी रौद्री रक्ता श्वेता सितेतरा ॥ ३ ॥ प्रातर्बाला च
मध्याह्ने यौवनस्था भवेत्पुनः ॥ वृद्धा सायं भगवती
चिंत्यते मुनिभिः सदा ॥ ४ ॥ हंसस्था गरुडारूढा तथा
वृषभवाहिनी ऋग्वेदाध्यायिनी भूमौ दृश्यते या तपस्विभिः
॥ ५ ॥ यजुर्वेदं पठंती च अंतरिक्षे विराजते । सा सामगापि
सर्वेषु भ्राम्यमाणा तथा भुवि ॥ ६ ॥ रुद्रलोकं गता
त्वं हि विष्णुलोकनिवासिनी ॥ त्वमेव ब्रह्मणो लोकेऽमर्त्या-

नुग्रहकारिणी ॥ ७ ॥ सप्तर्षिप्रीतिजननी माया बहुवरप्रदा ॥ शिवयोः करनेत्रोत्था ह्यश्रुस्वेदसमुद्भवा ॥ ८ ॥ आनंदजननी दुर्गा दशधा परिपठ्यते ॥ वरेण्या वरदा चैव वरिष्ठा वरवर्णिनी ॥ ९ ॥ गरिष्ठा च वराहा च वरारोहा च सप्तमी ॥ नीलगंगा तथा संध्या सर्वदा भोगमोक्षदा ॥ १० ॥ भागीरथी मर्त्यलोके पाताले भोगवत्यपि ॥ त्रिलोकवाहिनी देवी स्थानत्रयनिवासिनी ॥ ११ ॥ भूर्लोकस्था त्वमेवासि धारित्री लोकधारिणी ॥ भुवो लोके वायुशक्तिः स्वर्लोके तेजसां निधिः ॥ १२ ॥ महर्लोके महासिद्धिर्जनलोकेऽजनेत्यपि ॥ तपस्विनी तपोलोके सत्यलोके तु सत्यवाक् ॥ १३ ॥ कमला विष्णुलोके च गायत्री ब्रह्मलोकदा ॥ रुद्रलोके स्थिता गौरी हरार्धांगनिवासिनी ॥ १४ ॥ अहमो महतश्चैव प्रकृतिस्त्वं हि गीयसे ॥ साम्भावस्थात्मिका त्वं हि शबलब्रह्मरूपिणी ॥ १५ ॥ ततः परा पराशक्तिः परमा त्वं हि गीयसे ॥ इच्छाशक्तिः क्रियाशक्तिर्ज्ञानशक्तिस्त्रिशक्तिदा ॥ १६ ॥ गंगा च यमुना चैव विपाशा च सरस्वती सरयूर्देविका सिंधुर्नर्मदैरावती तथा ॥ १७ ॥ गोदावरी शतद्रुश्च कावेरी देवलोकगा ॥ कौशिका चन्द्रभागा च वितस्ता च सरस्वती ॥ १८ ॥ गंडकी तपिनी तोया गोमती वेत्रवत्यपि ॥ इडा च पिंगला चैव सुषुम्ना च तृतीयका ॥ १९ ॥ गांधारी हस्तजिह्वा च पूषाऽपूषा तथैव च अलंबुषा कुहूश्चैव शंखिनी प्राणवाहिनी ॥ २० ॥ नाडी च त्वं शरीरस्था गीयसे प्राक्तनैर्बुधैः ॥ हृत्पद्मस्था प्राणशक्तिः कण्ठस्था स्वप्ननायिका ॥ २१ ॥ तालुस्था त्वं सदाधारा बिंदुस्था बिंदुमालिनी ॥ मूले तु कुण्डलीशक्तिर्व्यापिनी केशमूलगा ॥ २२ ॥ शिखामध्यासना त्वं हि शिखाग्रे तु मनोन्मनी

किमन्यद्बहुनोक्तेन यत्किंचिज्जगतीत्रये ॥ ॥ २३ ॥ तत्सर्वं त्वं महादेवि श्रिये संध्ये नमोऽस्तुते ॥ इतीदं कीर्तिदं स्तोत्रं संध्यायां बहुपुण्यदम् ॥ २४ ॥ महापापप्रशमनं महासिद्धिविधायकम् ॥ य इदं कीर्तयेत् स्तोत्रं संध्याकाले समाहितः॥२५॥ अपुत्रः प्राप्नुयात्पुत्रं धनार्थी धनमाप्नुयात् ॥ सर्वतीर्थतपोदानयज्ञयोगफलं लभेत् ॥२६॥ भोगान्भुक्त्वा चिरं कालमंते मोक्षमवाप्नुयात् ॥ तपस्विभिः कृतं स्तोत्रं स्नानकाले तु यः पठेत् ॥ ॥ २७ ॥ यत्र कुत्र जले मग्नः संध्यामज्जनजं फलम् ॥ लभते नात्र संदेहः सत्यं सत्यं च नारद ॥ २८ ॥ शृणुयाद्योपि तद्भक्त्या स तु पापात्प्रमुच्यते ॥ पीयूषसदृशं वाक्यं संध्योक्तं नारदेरितम् ॥ २९ ॥

इति गायत्रीस्तोत्रं सम्पूर्णम्

## २३. गायत्रीस्तोत्रम् (२)

श्रीः ॥ यस्मिन्दृष्टे नैव दृश्येत विश्वं यस्मिल्लब्धे नैव लब्धव्यशेषः । यस्मिन् ज्ञाते नैव वेद्यांतराशा गायत्र्यर्थं पञ्चवक्त्रं प्रपद्ये ॥१॥ या गायत्री नामधेयं महार्थं सार्थं कर्तुं संप्रविष्टोपनाये। मार्गे मन्त्रान् सर्वतो दर्शयित्वा तारे लीना सर्ववेदार्थदीपं ॥ २ ॥ श्रोतव्यं मे वाक्यमेतत्समस्तैर्वर्णैर्भाव्यं स्वाश्रमप्राप्तचिह्नैः । तेभ्यस्तुष्येच्छंकरः श्रीहरिर्वा प्रष्टव्यो वः श्रीगुरुः स्वैर्विनीतैः ॥३॥ गायत्री चेत्सम्यगाप्ता क्रमेण सा संजप्ता कर्मशुद्ध्या द्विजेन । सा विज्ञाता गोपिता संप्रदायात्किं नो दद्याद्वेदमाता मता चेत् ॥ ४ ॥ बुद्धावीशारोहणं कर्म तस्याः सा चेत्यक्ता त्यक्त ईशो द्विजेन । यस्यां सर्वा देवताः संप्रविष्टाः सर्वात्मानं मन्त्रराजं प्रपद्ये ॥ ५ ॥ विष्णुःशंभुर्भास्करो विघ्नराजो या वा का वा देवतास्या विभूति । सैकोपास्या वेदमार्गैकनिष्ठैः क्षीराब्धौ किं दुग्धभिक्षाप्रयासः ॥ ६ ॥ नेयं लभ्या मानुषाणां झषाणां गङ्गाशब्दो मानुषत्वैकहेतुः । यस्या लब्ध्यै वेदिकाग्रेसराणां वंशे वेदैः संस्कृते

जन्महेतुः ॥ ७ ॥ मंत्रैः किं तैर्यैः प्रतीक्ष्येत देवी गायत्र्यंबा संप्रवेष्टुं द्विजेषु । देवैः किं तैरग्निना पुष्टिमद्भिस्तस्माद्भस्मोद्भूषिता सा निषेव्या ॥ ८ ॥ दत्तं भस्म श्रीत्रिपादांबयैतंत्र्यंघ्रेरग्नेः शेषरूपं स्वरूपम् । तस्माद्भस्म प्रोच्यते भासनाच्च भूतिर्गायत्र्यंबयैश्यात्रिपुण्ड्रम् ॥ ९ ॥ शैवोऽन्यो वा यां विना किं द्विजः स्याच्छैवोऽन्यो वा दीक्षया वेदमातुः। तस्माच्छैवो वैष्णवोऽन्येषु गण्यो गायत्र्याप्ता ब्रह्मता वेदमान्या ॥ १० ॥ भेदापोहव्याप्तिं सा बिभर्ति ध्यानैर्भिन्नैर्ध्याननिष्ठैकवेद्याम् ।तस्मान्नामान्यत्र संयान्ति सर्वाण्यस्या निष्ठा शांभवी वैष्णवी च ॥११॥ लोकस्थास्ते विष्णुरुद्रादिदेवाः कैश्चित्कामैः कैश्चिदेवाधिकारैः। गायत्र्यास्ता मूर्तयः सेवनीया गायत्र्यां ते सेविताः संभ्रमेण ॥ १२ ॥ ब्रह्मत्वं चेदाप्तुकामोऽस्युपास्व गायत्रीं चेल्लोककामोऽन्यदेवम् । कामो ज्ञातः स्वीयपादप्रवृत्त्या वादः को वा तृप्तिहीने प्रवृत्तिः ॥ १३ ॥ बुद्धेः साक्षी बुद्धिगम्यो जपादौ गायत्र्यर्थः सोऽनघो वेदसारः। तद्ब्रह्मैव ब्रह्मतोपासकस्याप्येवं मन्त्रः कोऽस्ति तन्त्रे पुराणे ॥१४॥जात्यश्वः किं जातिमाप्तुं सकामो गत्यभ्यासात्स्पष्टतामेति जातेः। ब्रह्मत्वाप्तौ कः प्रयासो द्विजानां यद्गायत्र्या व्यज्यते चाष्टमेऽब्दे ॥ १५ ॥ ब्रह्मत्वस्य ख्यापनार्थं प्रविष्टा गायत्रीयं तावतास्य द्विजत्वम्। कर्णद्वारा ब्रह्मजन्मप्रदानादुक्तो वेदे ब्राह्मणो ब्रह्मनिष्ठः ॥ १६ ॥ एषा निष्ठा दुर्लभा मर्त्यबुद्धौ तस्माल्लोके वैष्णवाः शांभवाश्च।भिन्नं भिन्नं मार्गमास्थाय वेदं क्षामं कुर्वन्त्यास्तिकच्छद्मने मे ॥१७॥ पक्षिद्वंद्वं विद्यते स्वस्वदेहे भोक्तारं सा ध्यानमाचष्ट एतत्।यावत्क्षीणा भोक्तृता स्यात्ततस्तु ज्ञात्वा ब्रूयाद्ब्रह्मतां स्वस्य विद्वान् ॥१८॥ गायत्र्यर्थं नो विजानाति कश्चित्तस्मादन्यं देवमाहुर्द्विजोऽपि। विज्ञातश्चेत्सर्ववादस्य शांतिर्मुक्तिर्हस्ते गायमानस्य मन्त्रम् ॥१९ भस्मांतं चेद्विश्वमेतत्समस्तं भस्मोद्भूतं भस्म संभासते च । तस्माद्ब्रह्म प्राहुराद्यैर्वचोभिर्वेदास्तस्माद्भस्म लिंगं द्विजानाम् ॥ २० ॥ इति श्रीशंकराचार्याभि-

ाय: कृष्णभिक्षुणा ॥ वर्णितस्तेन गायत्री विभूत्या सह नन्दतु २१।

इतिश्रीमत्पं० कृष्णानंदसरस्वतीवि० गायत्रीस्तोत्रं सम्पूर्णम्

## २४. सरस्वतीस्तोत्रम्

श्रीगणेशाय नमः । ॐ अस्य श्रीसरस्वतीस्तोत्रमन्त्रस्य ब्रह्मा ऋषिः । गायत्री छन्दः । श्रीसरस्वती देवता। धर्मार्थकाममोक्षार्थे जपे विनियोगः । आरूढा श्वेतहंसे भ्रमति च गमने दक्षिणे चाक्षसूत्रं वामे हस्ते च दिव्याम्बरकनकमयं पुस्तकं ज्ञानगम्या सा वीणां वादयन्ती स्वकरकर जपैः शास्त्रविज्ञानशब्दैः क्रीडन्ती दिव्यरूपा करकमलधरा भारती सुप्रसन्ना ॥ १ ॥ श्वेतपद्मासना देवी श्वेतगन्धानुलेपना । अर्चिता मुनिभिः सर्वैर्ऋषिभिः स्तूयते सदा । एवं ध्यात्वा सदा देवी वांच्छितं लभते नरः ॥ २ ॥ शुक्लां ब्रह्मविचारसारपरमामाद्यां जगव्द्यापिनीं वीणापुस्तकधारिणीमभयदां जाड्यान्धकारापहाम् । हस्ते स्फाटिकमालिकां विदधतीं पद्मासने संस्थितां वन्दे तां परमेश्वरीं भगवतीं बुद्धिप्रदां शारदाम् ॥ ३ ॥ या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना या ब्रह्माच्युतशंकरप्रभृतिभिर्देवैः सदा वन्दिता सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ॥ ४ ॥ ह्रीं ह्रीं हृद्यैकबीजे शशिरुचिकमले कल्पविस्पष्टशोभे भव्ये भव्यानुकूले कुमतिवनदवे विश्ववन्द्यांघ्रिपद्मे । पद्मे पद्मोपविष्टे प्रणतजनमनोमोदसंपादयित्रि प्रोत्फुल्लज्ञानकूटे हरिनिजदयिते देवि संहारसारे ॥ ५ ॥ ऐं ऐं ऐं ऐं दृष्टमन्त्रे कमलभवमुखाम्भोजभूत स्वरूपे रूपारूपप्रकाशे सकलगुणमये निर्गुणे निर्विकारे । न स्थूले नैव सूक्ष्मेऽप्यविदितविभवे नापि विज्ञानतत्वे विश्वे विश्वान्तरात्मे सुरवरनरनमिते निष्कले नित्यशुद्धे ॥ ६ ॥ ह्रीं ह्रीं ह्रीं जाप्यतुष्टे हिमरुचिमुकुटे वल्लकीव्यग्रहस्ते मातर्मातर्नमस्ते दह दह जडतां देहि बुद्धिं प्रशस्ताम् ॥

विद्ये वेदान्तवेद्ये परिणतपठिते मोक्षदे मुक्तिमार्गे मार्गातीतस्वरूपे भव मम वरदा शारदे शुभ्रहारे ॥ ७ ॥ धीं धीं धीं धारणाख्ये धृतिमतिनतिभिर्नामभिः कीर्तनीये नित्येऽनित्ये निमित्ते मुनिगणनमिते नूतने वै पुराणे । पुण्ये पुण्यप्रवाहे हरिहरनमिते नित्यशुद्धे सुवर्णे मातर्मात्रार्धतत्वे मतिमति मतिदे माधवप्रीतिमोदे ॥ ८ ॥ हूं हूं हूं स्वरूपे दहदह दुरितं पुस्तकव्यग्रहस्ते संतुष्टाकारचित्ते स्मितमुखि शुभगे जृम्भिणि स्तम्भविद्ये । मोहेमुग्धप्रवाहे कुरु मम विमतिध्वान्तविध्वंसमीडे गीर्गौर्वाग्भारति त्वं कविवररसनासिद्धिदे सिद्धिसाध्ये ॥९॥ स्तौमि त्वां त्वां च वन्दे मम खलुरसनां नो कदाचित्त्यजेथा मा मे बुद्धिर्विरुद्धा भवतु न च मनो देवि मे यातु पापम् । मा मे दुःखं कदाचित्क्वचिदपि विषयेऽप्यस्तु मे नाकुलत्वं शास्त्रे वादे कवित्वे प्रसरतु मम धीर्मास्तु कुण्ठाकदापि ॥ १० ॥ इत्येतैः श्लोकमुख्यैः प्रतिदिनमुषसि स्तौति यो भक्तिनम्रो वाणी वाचस्पतेरप्यविदितविभवो वाक्पटुमृष्टकण्ठः । स्यादिष्टार्थलाभैः सुतमिव सततं पातितं सा च देवी सौभाग्यं तस्य लोके प्रभवति कविता विघ्नमस्तं प्रयाति ॥ ११ ॥ निर्विघ्नं तस्य विद्या प्रभवति सततं चाश्रुतग्रन्थबोधः कीर्तिस्त्रैलोक्यमध्ये निवसति वदने शारदा तस्य साक्षात् । दीर्घायुर्लोकपूज्यः सकलगुणनिधिः सन्ततं राजमान्यो वाग्देव्याः संप्रसादात्त्रिजगति विजयी जायते सत्सभासु ॥ १२ ॥ ब्रह्मचारी व्रती मौनी त्रयोदश्यां निरामिषः । सारस्वतो जनः पाठात्सकृदिष्टार्थलाभवान् ॥ १३ ॥ पक्षद्वये त्रयोदश्यामेकविंशतिसंख्यया । अविच्छिन्नः पठेद्धीमान्ध्यात्वा देवीं सरस्वतीम् ॥ १४ ॥ सर्वपापविनिर्मुक्तः सुभगो लोकविश्रुतः । वाञ्छितं फलमाप्नोति लोकेऽस्मिन्नात्र संशयः ॥ १५ ॥ ब्रह्मणेति स्वयं प्रोक्तं सरस्वत्याः स्तवं शुभम् । प्रयत्नेन पठेन्नित्यं सोऽमृतत्वाय कल्पते ॥ १६ ॥

इति श्रीमद्ब्रह्मणा विरचितं सरस्वतीस्तोत्रं संपूर्णम्

---

## २५. सरस्वतीस्तोत्रम्

बृहस्पतिरुवाच ॥ सरस्वति नमस्यामि चेतनां हृदि संस्थिताम् ॥ कंठस्थां पद्मयोनिं त्वां ह्रींकारां सुप्रियां सदा ॥ १ ॥ मतिदां वरदां चैव सर्वकामफलप्रदाम् । केशवस्य प्रियां देवीं वीणाहस्तां वरप्रदाम् ॥ २ ॥ मन्त्रप्रियां सदाहृद्यां कुमतिध्वंसकारिणीम् ॥ स्वप्रकाशां निरालंबामज्ञानतिमिरापहाम् ॥ ३ ॥ मोक्षप्रियां शुभां नित्यां सुभगां शोभनप्रियाम् ॥ पद्मोपविष्टां कुंडलिनीं शुक्लवस्त्रां मनोहराम् ॥ ४ ॥ आदित्यमंडले लीनां प्रणमामि जनप्रियाम् ॥ ज्ञानाकरां जगद्द्वीपां भक्तविघ्नविनाशिनीम् ॥ ५ ॥ इति सत्यं स्तुता देवी वागीशेन महात्मना ॥ आत्मानं दर्शयामास शरदिंदु-समप्रभा ॥ ६ ॥ श्रीसरस्वत्युवाच ॥ वरं वृणीष्व भद्र त्वं यत्ते मनसि वर्तते ॥ बृ० उ० । प्रसन्ना यदिमे देवि परज्ञानं प्रयच्छ मे ॥ ७ ॥ श्रीसरस्वत्युवाच ॥ दत्तं ते निर्मलं ज्ञानं कुमति ध्वंसकारकम् ॥ स्तोत्रेणानेन मां भक्त्या ये स्तुवंति सदा नराः ॥ ८ ॥ लभंते परमं ज्ञानं मम तुल्यपराक्रमाः ॥ कवित्वं मत्प्रसा-देन प्राप्नुवंति मनोगतम् ॥ ९ ॥ त्रिसंध्यं प्रयतो भूत्वा यस्त्विमं पठते नरः ॥ तस्य कंठे सदा वासं करिष्यामि न संशयः ॥ १० ॥

इति श्रीरुद्रयामले बृहस्पतिविरचितं सरस्वतीस्तोत्रम्

---

## २६. नीलसरस्वतीस्तोत्रम्

श्रीगणेशाय नमः ॥ घोररूपे महारावे सर्वशत्रुभयंकरि । भक्तेभ्यो वरदे देवि त्राहि मां शरणागतम् ॥ १ ॥ ॐ सुरासुरा-र्चिते देवि सिद्धगन्धर्वसेविते जाड्यपापहरे देवि त्रा० ॥ २ ॥ जटाजूटसमायुक्ते लोलजिह्वान्तकारिणि । द्रुतबुद्धिकरे देवि त्रा० ॥ ३ ॥ सौम्यक्रोधधरे रूपे चण्डरूपे नमोस्तु ते ॥ सृष्टिरूपे नमस्तुभ्यं त्रा० ॥ ४ ॥ जडानां जडतां हन्ति भक्तानां भक्त-वत्सला । मूढतां हर मे देवि त्रा० ॥ ५ ॥ हूं हूं करमये देवि बलिहोमप्रिये नमः । उग्रतारे नमो नित्यं त्रा० ॥ ६ ॥ बुद्धिं

॥ ३ ॥ सौरिर्मे हृदयं पातु नाभिं शनैश्चरोऽवतु । ग्रहराजः कटिं पातु सर्वतो रविनन्दनः ॥ ४ ॥ पादौ मन्दगतिः पातु कृष्णः पात्वखिलं वपुः । रक्षामेतां पठेन्नित्यं सौरेर्नामबलैर्युताम् ॥ ५ ॥ सुखी पुत्री चिरायुश्च स भवेनात्र संशयः । ॐ शौरिः शनैश्चरः कृष्णो नीलोत्पलनिभः शनिः ॥ ६ ॥ शुष्कोदरो विशालाक्षो दुर्निरीक्ष्यो विभीषणः । शितिकण्ठनिभो नीलश्छायाहृदयनन्दनः ॥ ७ ॥ कालदृष्टिः कोटराक्षः स्थूलरोमा वलीमुखः । दीर्घो निर्मांसगात्रस्तु शुष्को घोरो भयानकः ॥ ८ ॥ नीलांशुः क्रोधनो रौद्रो दीर्घश्मश्रुर्जटाधरः । मन्दो मन्दगतिः खञ्जो तृप्तः संवर्तको यमः ॥ ९ ॥ ग्रहराजः कराली च सूर्यपुत्रो रविः शशी । कुजो बुधौ गुरुः काव्यो भानुजः सिंहिकासुतः ॥ १० ॥ केतुर्देवपतिर्बाहुः कृतान्तो नैर्ऋतस्तथा । कुशी मरुत्कुबेरश्च ईशानः सुर आत्मभूः ॥ ११ ॥ विष्णुर्हरो गणपतिः कुमारः काम ईश्वरः ॥ कर्ता हर्ता पालयिता राज्यसे राज्यदायकः ॥१२॥ छायासुतः श्यामलाङ्गो धनहर्ता धनप्रदः । क्रूरकर्म विधाताच सर्वकर्मावरोधकः ॥ १३ ॥ तुष्टो रुष्टः कामरूपः कामदो रविनन्दनः । ग्रहपीडाहरः शान्तो नक्षत्रेशो ग्रहेश्वरः ॥ १४ ॥ स्थिरासनः स्थिरगतिर्महाकायो महाबलः । महाप्रभो महाकालः कालात्मा कालकालकः ॥ १५ ॥ आदित्यभयदाता च मृत्युरादित्यनन्दनः । शतभिरुक्षदयिता त्रयोदशीतिथिप्रियः ॥ १६ ॥ तिथ्यात्मा तिथिगणनो नक्षत्रगणनायकः ॥ योगराशिमुहूर्तात्मा कर्ता दिनपतिः प्रभुः ॥ १७ ॥ शमीपुष्पप्रियः श्यामस्त्रैलोक्यभावदायकः । नीलवासाः क्रियासिन्धुर्नीलाञ्जनचयच्छविः ॥१८॥ सर्वरोगहरो देवः सिद्धो देवगणस्तुतः । अष्टोत्तरशतं नाम्नां सौरेश्छायासुतस्य यः ॥ १९ ॥ पठेन्नित्यं तस्य पीडा समस्तां नश्यति ध्रुवम् । कृत्वा पूजां पठेन्मर्त्यो भक्तिमान्यः स्तवं सदा ॥२०॥ विशेषतः शनिदिने पीडा तस्य विनश्यति । जन्मलग्ने स्थितिर्वापि गोचरे

क्रूरराशिगे ॥ २१ ॥ दशासु च गते सौरेतदा स्तवमिमं पठेत् । पूजयेद्यः शनिं भक्त्या शमीपुष्पाक्षताम्बरैः ॥ २२ ॥ विधाय लोहप्रतिमां नरो दुःखाद्विमुच्यते । बाधा धान्यग्रहाणां च यः पठेत्तस्य नश्यति ॥ २३ ॥ भीतो भयाद्विमुच्येत बद्धो मुच्येत बन्धनात् । रोगी रोगाद्विमुच्येत नरः स्तवमिमं पठेत् ॥ २४ ॥ पुत्रवान्धनवान् श्रीमान्जायतेनात्रसंशयः ॥ २५ ॥ नारद उवाच । स्तवं निशम्य पार्थस्य प्रत्यक्षोऽभूच्छनैश्चरः । दत्त्वा राज्ञे वरः कामं शनिश्चान्तर्दधे तदा ॥ २६ ॥

इति श्रीभविष्यपुराणे शनैश्चरस्तवराजः समाप्तः

---

## ९. शनैश्चरस्तोत्रम्

श्रीगणेशाय नमः ॥ अस्य श्रीशनैश्चरस्तोत्रस्य दशरथ ऋषिः । श्री शनैश्चरो देवता । त्रिष्टुप् छन्दः । शनैश्चर प्रीत्यर्थे जपे विनियोगः ॥ दशरथ उवाच । कोणोऽन्तको रौद्रयमोऽथ बभ्रुः कृष्णः शनिः पिंगलमन्दसौरिः । नित्यं स्मृतो यो हरते च पीडां तस्मै नमः श्रीरविनन्दनाय ॥ १ ॥ सुरासुराः किं पुरुषोरगेन्द्रा गन्धर्वविद्याधरपन्नगाश्च । पीडयन्ति सर्वे विषमस्थितेन तस्मै० ॥२॥ नरा नरेन्द्राः पशवो मृगेन्द्रा वन्याश्च ये कीटपतङ्गभृङ्गाः । पीडयन्ति सर्वे विषमस्थितन तस्मै० ॥ ३ ॥ देशाश्च दुर्गाणि वनानि यत्र सेनानिवेशाः पुरपत्तनानि । पीडयन्ति सर्वेविषमस्थितेन तस्मै० ॥ ४ ॥ तिलैर्यवैर्माषगुडान्नदानैर्लोहेन नीलाम्बरदानतो वा । प्रीणाति मन्त्रैर्निजवासरे च तस्मै० ॥५॥ प्रयागकूले यमुनातटे च सरस्वतीपुण्यजले गुहायाम् । यो योगिनां ध्यानगतोऽपि सूक्ष्मस्तस्मै० ॥ ६ ॥ अन्यप्रदेशात्स्वगृहं प्रविष्टस्तदीयवारे स नरः सुखी स्यात् । गृहाद्गतो यो न पुनः प्रयाति तस्मै० ॥ ७ ॥ स्रष्टा स्वयंभूर्भुवनत्रयस्य त्राता हरीशो हरते पिनाकी ।एकस्त्रिधा ऋग्यजुःसाममूर्तिस्तस्मै० ॥८॥ शन्यष्टकं यः प्रयतः प्रभाते नित्यं सपुत्रैः पशुबान्धवैश्च । पठेत्तु सौख्यं

भुवि भोगयुक्तः प्राप्नोति निर्वाणपदं तदन्ते ॥ ९ ॥ कोणस्थः पिंगलो बभ्रुः कृष्णो रौद्रोऽन्तको यमः । सौरिः शनैश्चरो मन्दः पिप्पलादेन संस्तुतः ॥ १० ॥ एतानि दश नामानि प्रातरुत्थाय यः पठेत् । शनैश्चरकृता पीडा न कदाचिद्भविष्यति ॥ ११ ॥

इति श्रीशनैश्चरस्तोत्रं संपूर्णम्

## १०. शनिस्तोत्रम्

ॐ शनैश्चरः स्वधाकारी छायाभूः सूर्यनन्दनः । मार्तंडजो यमः सौरिः पंगुश्च ग्रहनायकः ॥ १ ॥ ब्रह्मण्योऽ क्रूरधर्मज्ञो नीलवर्णोऽञ्जनद्युतिः । द्वादशैतानि नामानि त्रिसंध्यं यः पठेन्नरः ॥ २ ॥ तस्य पीडां नचैवाहं करिष्यामि न संशयः ॥ गोचरे जन्मलग्ने वा दशास्वंतर्दशासु च ॥ ३ ॥

इति शनैश्चरस्तोत्रम्

## ११. राहुस्तोत्रम्

श्रीगणेशाय नमः ॥ राहुर्दानवमन्त्री च सिंहिकाचित्तनन्दनः । अर्धकायः सदा क्रोधी चन्द्रादित्यविमर्दनः ॥१॥ रौद्रो रुद्रप्रियो दैत्यः स्वर्भानुर्भानुभीतिदः। ग्रहराजः सुधापायी राकातिथ्यभिलाषकः ॥२॥ कालदृष्टिः कालरूपः श्रीकण्ठहृदयाश्रयः । विधुंतुदः सैंहिकेयो घोररूपो महाबलः ॥ ३ ॥ ग्रहपीडाकरो दंष्ट्री रक्तनेत्रो महोदरः। पञ्चविंशति नामानि स्मृत्वा राहुं सदा नरः ॥ ४ ॥ यः पठेन्महती पीडा तस्य नश्यंति केवलम् । आरोग्यं पुत्रमतुलां श्रियं धान्यं पशूस्तथा ॥ ५ ॥ ददाति राहुस्तस्मै यः पठते स्तोत्रमुत्तमम् । सततं पठते यस्तु जीवेद्वर्षशत नरः ॥ ६ ॥

इति श्रीस्कन्दपुराणे राहुस्तोत्रं संपूर्णम्

## १२. केतुपञ्चविंशतिनामस्तोत्रम्

श्रीगणेशाय नमः ॥ केतुः कालः कलयिता धूम्रकेतुर्विवर्णकः। लोककेतुर्महाकेतुः सर्वकेतुर्भयप्रदः ॥ १ ॥ रौद्रो रुद्रप्रियो रुद्रः

क्रूरकर्मा सुगन्धधृक् । पलालधूमसंकाशश्चित्रयज्ञोपवीतधृक् ॥ ॥ २ ॥ तारागणविमर्दी च जैमिनेयो ग्रहाधिपः । पञ्चविंशति नामानि केतोर्यः सततं पठेत् ॥३॥ तस्य नश्यति बाधा च सर्वा केतुप्रसादतः । धनधान्यपशूनां च भवेद्वृद्धिर्न संशयः ॥ ४ ॥

इति श्रीस्कंदपुराणे केतोः पञ्चविंशतिनामस्तोत्रं संपूर्णम्

---

## १३. नवग्रहपीडाहरस्तोत्रम्

श्रीगणेशाय नमः ॥ ग्रहाणामादिरादित्यो लोकरक्षणकारकः विषमस्थानसंभूतां पीडां हरतु मे रविः ॥ १ ॥ रोहिणीशः सुधामूर्ति सुधागात्रः सुधाशनः । विषमस्थानसंभूतां पीडां हरतु मे विधुः ॥ २ ॥ भूमिपुत्रो महातेजा जगतां भयकृत्सदा । वृष्टि-कृद्वृष्टिहर्ताच पीडां हरतु मे कुजः ॥ ३ ॥ उत्पातरूपो जगतां चन्द्रपुत्रो महाद्युतिः । सूर्यप्रियकरो विद्वान्पीडां हरतु मे बुधः ॥ ४ ॥ देवमन्त्री विशालाक्षः सदा लोकहिते रतः । अनेक शिष्य संपूर्णः पीडा हरतु मे गुरुः ॥५॥ दैत्यमन्त्री गुरुस्तेषां प्राणदश्च महामतिः । प्रभुस्ताराग्रहाणां च पीडां हरतु मे भृगुः ॥ ६ ॥ सूर्य पुत्रो दीर्घदेहो विशालाक्षः शिवप्रियः । दीर्घचारः प्रसन्नात्मा पीडां हरतु मे शनिः ॥ ७ ॥ महाशिरा महावक्त्रो दीर्घदंष्ट्रो महाबलः । अतनुश्चोर्ध्वकेशश्च पीडां हरतु मे शिखी ॥ ८ ॥ अनेकरूपवर्णैश्च शतशोऽथ सहस्रशः । उत्पातरूपो जगतां पीडां हरतु मे तमः ॥ ९ ॥

इति नवग्रहपीडाहरस्तोत्रम्

---

## १४. नवग्रहस्तोत्रम्

श्रीगणेशाय नमः ॥ जपाकुसुमसंकाशं काश्यपेयं महाद्युतिम् । तमोरिं सर्वपापघ्नं प्रणतोऽस्मि दिवाकरम् ॥ १ ॥ दधिशङ्खतुषाराभं क्षीरार्णवसमुद्भवम् । नमामि शशिनं सोमं शंभोर्मुकुट-भूषणम् ॥ २ ॥ धरणीगर्भसंभूतं विद्युत्कान्ति समप्रभम् । कुमार

शक्तिहस्तं तं मङ्गलं प्रणमाम्यहम् ॥३॥ प्रियङ्गुकलिकाश्यामं रूपेणाप्रतिमं बुधम् । सौम्यं सौम्यगुणोपेतं तं बुधं प्रणमाम्यहम् ॥ ४ ॥ देवानां च ऋषीणां च गुरुं काञ्चनसन्निभम् । बुद्धिभूतं त्रिलोकेशं तं नमामि बृहस्पतिम् ॥ ५ ॥ हिमकुन्दमृणालाभं दैत्यानां परमं गुरुम् । सर्वशास्त्रप्रवक्तारं भार्गवं प्रणमाम्यहम् ॥ ६ ॥ नीलाञ्जनसमाभासं रविपुत्रं यमाग्रजम् । छायामार्तण्ड संभूतं तं नमामि शनैश्चरम् ॥ ७ ॥ अर्धकायं महावीर्यं चन्द्रादित्यविमर्दनम् । सिंहिकागर्भसंभूतं तं राहुं प्रणमाम्यहम् ॥८॥ पलाशपुष्पसंकाशं तारकाग्रहमस्तकम् । रौद्रं रौद्रात्मकं घोरं तं केतुं प्रणमाम्यहम् ॥ ९ ॥ इति व्यासमुखोद्गीतं यः पठेत्सुसमाहितः । दिवा वा यदि वा रात्रौ विघ्नशान्तिर्भविष्यति ॥ १० ॥ नरनारीनृपाणां च भवेद्दुःस्वप्ननाशनम् । ऐश्वर्यमतुलं तेषामारोग्यं पुष्टिवर्धनम् ॥ ११ ॥ ग्रहनक्षत्रजाः पीडास्तस्कराग्निसमुद्भवाः । ताः सर्वाः प्रशमं यान्ति व्यासो ब्रूते न संशयः ॥ १२ ॥

इति श्रीव्यासविरचितं नवग्रहस्तोत्रं संपूर्णम्

इति नवग्रहस्तोत्राणि १४

---

# अथ संकीर्णस्तोत्राणि

## १. शिवरामाष्टकप्रारंभः

श्रीगणेशाय नमः ॥ शिव हरे शिवरामसखे प्रभो त्रिविधतापनिवारण हे प्रभो । अज जनेश्वर यादव पाहि मां शिव हरे विजयं कुरु मे वरम् ॥ १ ॥ कमललोचन राम दयानिधे हर गुरो गजरक्षक गोपते । शिवतनो भव शंकर पाहि मां शिवहरे वि० ॥ २ ॥ स्वजनरञ्जनमङ्गलमन्दिरं भजति यः पुरुषः परमं पदम् । भवति तस्य सुखं परमाद्भुतं शिव हर वि० ॥ ३ ॥ जय युधिष्ठिरवल्लभ भूपते जय जयार्जितपुण्यपयोनिधे । जय कृपामय कृष्ण नमोऽस्तु ते शिव हरे विज० ॥ ४ ॥ भवविमोचन माधव मापते सुकविमानसहंस शिवारते । जनकजारत राघव रक्ष मां शिव हरे वि० ॥५॥ अवनिमण्डलमंगल मापते जलदसुन्दर राम रमापते । निगमकीर्तिगुणार्णव गोपते शिव हरे वि० ॥ ६ ॥ पतितपावन नाममयी लता तव यशो विमलं परिगीयते । तदपि माधव मां किमुपेक्षसे शिव हरे वि० ॥ ७ ॥ अमरतापरदेव रमापते विजयस्तव नामघनोपमे । मयि कथं करुणार्णव जायते शिव हरे० ॥ ८ ॥ हनुमतः प्रियतोषकर प्रभो सुरसरिद्धृतशेखर हे गुरो । मम विभो किमु विस्मरणं कृतं शिवहरे० ॥ ९ ॥ नरहरेरतिरंजनसुन्दरं पठति यः शिवरामकृतस्तवम् । विशति रामरमाचरणांबुजे शिव हरे० ॥१०॥ प्रातरुत्थाय यो भक्त्या पठेदेकाग्रमानसः विजयो जायते तस्य विष्णुमाराध्यमाप्नुयात् ॥११॥

इति श्रीरामानंदविरचितं शिवरामस्तोत्रम्

---

## २. भगवत्प्रातःस्मरणम्

श्रीगणेशाय नमः ॥ प्रातः स्मरामि फणिराजतनौ शयानं नागामरासुरनरादिजगन्निदानम् । वेदैः सहागमगणैरुपगीयमानं कांतारकेतनवतां परमं निधानम् ॥ १ ॥ प्रातर्भजामि भवसागरवारिपारं देवर्षिसिद्धनिवहैर्विहितोपहारम् । संदृप्तदानवकदंबम-

दापहारं सौन्दर्यराशिजलराशिसुताविहारम् ॥ २ ॥ प्रातर्नमामि शरदंबरकांति कांतं पादारविंदमकरंदजुषां भवान्तम् । नानावतारहृतभूमिभरं कृतान्तं पाथोजकंबुरथपादकरं प्रशांतम् ॥ ३ ॥ श्लोकत्रयमिदं पुण्यं ब्रह्मानंदेन कीर्तितम् । यः पठेत्प्रातरुत्थाय सर्वपापैः प्रमुच्यते ॥ ४ ॥

इति श्रीपरमहंसस्वामिब्रह्मानंदविरचितं श्रीभगवत्प्रातः-
स्मरणं सम्पूर्णम्

---

## ३. प्रातःस्मरणस्तोत्रम्

श्रीगणेशाय नमः ॥ प्रातः स्मरामि हृदि संस्फुरदात्मतत्त्वं सच्चित्सुखं परमहंसगतिं तुरीयम् । यत्स्वप्नजागरसुषुप्तमवैति नित्यं तद्ब्रह्म निष्कलमहं न च भूतसंघः ॥ १ ॥ प्रातर्भजामि मनसो वचसामगम्यं वाचो विभाति निखिला यदनुग्रहेण । यन्नेति नेति वचनैर्निगमाअवोचुस्तं देवदेवमजमच्युतमाहुरग्र्यम् ॥२॥ प्रातर्नमामि तमसः परमर्कवर्णं पूर्णं सनातनपदं पुरुषोत्तमाख्यम् यस्मिन्निदं जगदशेषमशेषमूर्तौ रज्ज्वाभुजंगम इव प्रतिभासितं वै ॥ ३ ॥ श्लोकत्रयमिदं पुण्यं लोकत्रय विभूषणम् । प्रातःकाले पठेद्यस्तु स गच्छेत्परमं पदम् ॥ ४ ॥

इति श्रीभगवत्पादाचार्यविरचितं प्रातःस्मरण-
स्तोत्रं सम्पूर्णम्

---

## ४. अश्वत्थस्तोत्रम्

श्रीगणेशाय नमः ॥ श्री नारद उवाच ॥ अनायासेन लोकोऽयं सर्वान् कामानवाप्नुयात् । सर्वदेवात्मकं चैकं तन्मे ब्रूहि पितामह ॥१॥ ब्रह्मोवाच ॥ शृणु देवमुनेऽश्वत्थं शुद्धं सर्वात्मकं तरुम् । यत्प्रदक्षिणतो लोकः सर्वान् कामान्समश्नुते ॥ २ ॥ अश्वत्थाद्दक्षिणे रुद्रः पश्चिमे विष्णुरास्थितः । ब्रह्मा चोत्तरदेशस्थः सर्वे त्विन्द्रादिदेवताः ॥ ३ ॥ स्कंधोपस्कंधपत्रेषु गोविप्रमुनयस्तथा । मूलं वेदाः पयो यज्ञाः संस्थिता मुनिपुंगव ॥ ४ ॥ पूर्वादिदिक्षु

संयाता नदीनदसरोऽब्धयः। तस्मात्सर्वप्रयत्नेन ह्यश्वत्थं संश्रयेद्बुधः ॥५॥ त्वं क्षीर्यफलकश्चैव शीतलश्च वनस्पते। त्वामाराध्य नरो विंद्यादैहिकामुष्मिकं फलम् ॥ ६ ॥ चलद्दलाय वृक्षाय सर्वदाश्रितविष्णवे। बोधितत्त्वाय देवाय ह्यश्वत्थाय नमो नमः ॥ ७ ॥ अश्वत्थ यस्मात्त्वयि वृक्षराज नारायणस्तिष्ठति सर्वकाले। अतः श्रुतस्त्वं सततं तरूणां धन्योऽसि चारिष्टविनाशकोऽसि ॥८॥ क्षीरदस्त्वं च येनेह येन श्रीस्त्वां निषेवते। सत्येन तेन वृक्षेन्द्र मामपि श्रीर्निषेवताम् ॥ ९ ॥ एकादशात्मरुद्रोऽसि वसुनाथशिरोमणिः। नारायणोऽसि देवानां वृक्षराजोऽसिपिप्पल ॥ १० ॥ अग्निगर्भः शमीगर्भोः देवगर्भः प्रजापतिः। हिरण्यगर्भो भूगर्भो यज्ञगर्भो नमोऽस्तु ते ॥ ११ ॥ आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च। ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥ १२ ॥ सततं वरुणो रक्षेत्त्वामाराद्वृष्टिराश्रयेत्। परितस्त्वां निषेवंतां तृणानि सुखमस्तु ते ॥ १३ ॥ अक्षिस्पंदं भुजस्पंदं दुःस्वप्नं दुर्विचिंतनम्। शत्रूणां च समुत्थानं ह्यश्वत्थ शमय प्रभो ॥१४॥ अश्वत्थाय वरेण्याय सर्वैश्वर्यप्रदायिने। नमो दुःस्वप्ननाशाय सुस्वप्न फलदायिने ॥१५॥ मूलतो ब्रह्मरूपाय मध्यतो विष्णुरूपिणे। अन्ततः शिवरूपाय वृक्षराजाय ते नमः ॥ १६ ॥ यं दृष्ट्वा मुच्यते रोगैः स्पृष्ट्वा पापैः प्रमुच्यते। यदाश्रयाच्चिरंजीवी तमश्वत्थं नमाम्यहम् ॥१७॥ अश्वत्थ सुमहाभाग सुभग प्रियदर्शन। इष्टकामांश्च मे देहि शत्रुभ्यस्तु पराभवम् ॥ १८ ॥ आयुः प्रजां धनं धान्यं सौभाग्यं सर्वसंपदम्। देहि देव महावृक्ष त्वामहं शरणं गतः ॥ १९ ॥ ऋग्यजुः साममंत्रात्मा सर्वरूपीपरात्परः। अश्वत्थोवेदमूलोऽसावृषिभिः प्रोच्यते सदा ॥ २० ॥ ब्रह्महा गुरुहा चैव दरिद्रो व्याधिपीडितः। आवर्त्य लक्षसंख्यं तत्स्तोत्रमेतत्सुखी भवेत् ॥ २१ ॥ ब्रह्मचारी हविष्याशी त्वधःशायी जितेन्द्रियः। पापोपहतचित्तोऽपिव्रतमेतत्समाचरेत् ॥ २२ ॥ एकहस्त द्विह-

स्तंवा कुर्याद्गोमयलेपनम् । अर्चेत्पुरुषसूक्तेन प्रणवेन विशेषतः ॥२३॥ मौनी प्रदक्षिणं कुर्यात्प्रागुक्तफलभाग्भवेत् । विष्णोर्नामसहस्रेण ह्यच्युतस्यापि कीर्तनात् ॥ २४ ॥ पदे पदान्तरं गत्वा करचेष्टाविवर्जितः । वाचा स्तोत्रं मनो ध्याने चतुरङ्गं प्रदक्षिणम् ॥२५॥ अश्वत्थः स्थापितो येन तत्कुलं स्थापितं ततः । धनायुषां समृद्धिस्तु नरकात्तारयेत्पितॄन् ॥ २६ ॥ अश्वत्थमूलमाश्रित्य शाकान्नोदकदानतः । एकस्मिन् भोजिते विप्रे कोटिब्राह्मणभोजनम् ॥ २७ ॥ अश्वत्थमूलमाश्रित्य जपहोमसुरार्चनात् । अक्षयं फलमाप्नोति ब्रह्मणो वचनं यथा ॥२८॥ एवमाश्वासितोऽश्वत्थः सदाश्वासाय कल्पते । यज्ञार्थं छेदितेऽश्वत्थे ह्यक्षयं स्वर्गमाप्नुयात् ॥ २९ ॥ छिन्नो येन वृथाश्वत्थश्छेदितः पितृदेवताः । अश्वत्थः पूजितो यत्र पूजितः सर्वदेवताः ॥ ३० ॥

इति ब्रह्मनारदसंवादे अश्वत्थस्तोत्रं सम्पूर्णम्

---

## ५. नवनागस्तोत्रम्

श्रीगणेशाय नमः ॥ अनंतं वासुकिं शेषं पद्मनाभं च कंबलम् । शंखपालं धृतराष्ट्रं च तक्षकं कालियं तथा ॥ १ ॥ एतानि नव नामानि नागानां च महात्मनाम् । सायंकाले पठेन्नित्यं प्रातःकाले विशेषतः । विषाद् भयं तस्य नास्ति सर्वत्र विजयी भवेत् ॥ २ ॥

इति नवनागस्तोत्रं संपूर्णम्

---

## ६. तुलसीकवचम्

श्रीगणेशाय नमः॥ अस्य श्रीतुलसीकवचस्तोत्रमंत्रस्य श्रीमहादेव ऋषिः अनुष्टुप् छन्दः श्रीतुलसी देवता मनईप्सितकामनासिद्ध्यर्थं जपे विनियोगः । तुलसी श्रीमहादेवि नमः पंकजधारिणि । शिरो मे तुलसी पातु भालं पातु यशस्विनी ॥ १ ॥ दृशौ मे पद्मनयना श्रीसखी श्रवणे मम । घ्राणं पातु सुगन्धा मे मुखं च सुमुखी मम ॥ २ ॥ जिह्वां मे पातु शुभदा कण्ठं विद्यामयी मम । स्कन्धौ कह्लारिणी पातु हृदयं विष्णुवल्लभा ॥ ३ ॥ पुण्यदा

मे पातुः मध्यं नाभिं सौभाग्यदायिनी। कटिं कुण्डलिनी पातु ऊरू नारदवंदिता ॥ ४ ॥ जननी जानुनी पातु जंघे सकलवंदिता। नारायणप्रिया पादौ सर्वाङ्गं सर्वरक्षिणी ॥ ५ ॥ संकटे विषमे दुर्गे भये वादे महाहवे। नित्यं हि संध्ययोः पातु तुलसी सर्वतः सदा ॥६॥ इतीदं परमं गुह्यं तुलस्याः कवचामृतम्। मर्त्यानाममृतार्थाय भीतानामभयाय च ॥ ७ ॥ मोक्षाय च मुमुक्षूणां ध्यायिनां ध्यानयोगकृत्। वशाय वश्यकामानां विद्यायै वेदवादिनाम् ॥ ८ ॥ द्रविणाय दरिद्राणां पापिनां पापशान्तये ॥ ९ ॥ अन्नाय क्षुधितानां च स्वर्गाय स्वर्गमिच्छताम्। पशव्यं पशुकामानां पुत्रद पुत्रकांक्षिणाम् ॥ १० ॥ राज्याय भ्रष्टराज्यानामशान्तानां च शान्तये। भक्त्यर्थं विष्णुभक्तानां विष्णौ सर्वान्तरात्मनि ॥ ॥ ११ ॥ जाप्यं त्रिवर्गसिद्ध्यर्थं गृहस्थेन विशेषतः। उद्यन्तं चण्डकिरणमुपस्थाय कृताञ्जलिः ॥ १२ ॥ तुलसीकानने तिष्ठन्नासीनो वा जपेदिदम्। सर्वान् कामानवाप्नोति तथैव मम सन्निधिम् ॥ १३ ॥ मम प्रियकरं नित्यं हरिभक्तिविवर्धनम्। या स्यान्मृतप्रजा नारी तस्या अङ्गं प्रमार्जयेत् ॥ १४ ॥ सा पुत्रं लभते दीर्घजीविनं चाप्यरोगिणम्। वंध्याया मार्जयेदङ्गं कुशैर्मंत्रेण साधकः ॥ १५ ॥ साऽपि संवत्सरादेव गर्भं धत्ते मनोहरम्। अश्वत्थे राजवश्यार्थी जपेदग्नेः सुरूपभाक् ॥ १६ ॥ पलाशमूले विद्यार्थी तेजोर्थ्यभिमुखो रवेः। कन्यार्थी चंडिकागेहे शत्रुहत्यै गृहे मम ॥ १७ ॥ श्रीकामो विष्णुगेहे च उद्याने स्त्री वशा भवेत्। किमत्र बहुनोक्तेन शृणु सैन्येश तत्त्वतः ॥ १८ ॥ यं यं काममभिध्यायेत्तं तं प्राप्नोत्यसंशयम्। मम गेहगतस्त्वं तु तारकस्य वधेच्छया ॥ १९ ॥ जपन् स्तोत्रं च कवचं तुलसीगतमानसः। मण्डलात्तारकं हन्ता भविष्यसि न संशयः ॥ २० ॥

इति श्रीब्रह्माण्डपुराणे तुलसीमाहात्म्ये तुलसीकवचं नाम स्तोत्रं संपूर्णम्

---

## ७. तुलसीस्तोत्रम्

श्रीगणेशाय नमः॥जगद्धात्रि नमस्तुभ्यं विष्णोश्च प्रियवल्लभे। यतो ब्रह्मादयो देवाः सृष्टिस्थित्यन्तकारिणः ॥ १ ॥ नमस्तुलसि कल्याणि नमो विष्णुप्रिये शुभे। नमो मोक्षप्रदे देवि नमः संपत्प्रदायिके ॥ २ ॥ तुलसी पातु मां नित्यं सर्वापद्भ्योऽपि सर्वदा। कीर्तितापि स्मृता वापि पवित्रयति मानवम् ॥ ३ ॥ नमामि शिरसा देवीं तुलसीं विलसत्तनुम्। यां दृष्ट्वा पापिनो मर्त्या मुच्यंत सर्वकिल्बिषात् ॥ ४ ॥ तुलस्या रक्षितं सर्वं जगदेतच्चराचरम्। या विनिर्हन्ति पापानि दृष्टा वा पापिभिर्नरैः ॥ ५ ॥ नमस्तुलस्यतितरां यस्यै बद्ध्वा बलिं कलौ। कलयंति सुखं सर्वं स्त्रियो वैश्यास्तथापरे ॥ ६ ॥ तुलस्या नापरं किंचिद्दैवतं जगतीतले। यया पवित्रितो लोको विष्णुसंगेन वैष्णवः ॥७॥ तुलस्या पल्लवं विष्णोः शिरस्यारोपितं कलौ। आरोपयति सर्वाणि श्रेयांसि वरमस्तके ॥८॥ तुलस्यां सकला देवा वसंति सततं यतः। अतस्तामर्चयेल्लोके सर्वान् देवान् समर्चयन् ॥ ९ ॥ नमस्तुलसि सर्वज्ञे पुरुषोत्तमवल्लभे। पाहि मां सर्व पापेभ्यः सर्वसंपत्प्रदायिके ॥१०॥ इति स्तोत्रं पुरा गीतं पुण्डरीकेण धीमता। विष्णुमर्चयता नित्यं शोभनैस्तुलसीदलैः ॥ ११ ॥ तुलसी श्रीमहालक्ष्मीर्विद्याविद्यायशस्विनी। धर्म्या धर्मानना देवी देवदेवमनः प्रिया ॥१२॥ लक्ष्मी प्रियसखी देवी द्यौर्भूमिरचला चला। षोडशैतानि नामानि तुलस्याः कीर्तयन्नरः ॥ १३ ॥ लभते सुतरां भक्तिमंते विष्णुपदं लभेत् ॥ तुलसी भूर्महालक्ष्मीः पद्मिनी श्रीर्हरिप्रिया ॥ १४ ॥ तुलसी श्रीसखि शुभे पापहारिणि पुण्यदे। नमस्ते नारदनुते नारायणमनः प्रिये ॥ १५ ॥

इति श्रीपुण्डरीककृतं तुलसीस्तोत्रं सम्पूर्णम्

---

## ८. श्रीवेदव्यासाष्टकम्

श्रीगणेशाय नमः ॥ कलिमलास्तविवेकदिवाकरं समवलोक्य तमोवलितं जनम् । करुणया भुवि दर्शितविग्रहं मुनिवरं तमहं सततं भजे० ॥ १ ॥ भरतवंशसमुद्धरणेच्छया स्वजननीवचसा परिनोदितः । अजनयत्तनयत्रितयं प्रभुर्मुनिवरं तमहं सततं भजे ॥ २ ॥ मतिबलादि निरीक्ष्य कलौ नृणां लघुतरं कृपया निगमांबुधेः । समकरोदिह भागमनेकधा मुनिवरं तमहं सततं भजे ॥३॥ सकलधर्मनिरूपणसागरं विविधचित्रकथासमलंकृतम् । व्यरचयच्च पुराणकदंबकं मुनिवरं तमहं सततं भजे ॥ ४ ॥ श्रुतिविरोधसमन्वयदर्पणं निखिलवादिमतांध्यविदारणम् । ग्रथितवानपि सूत्रसमूहकं मुनिवरं तमहं सततं भजे ॥ ५ ॥ यदनुभाववशेन दिवं गतः समधिगम्य महास्त्रसमुच्चयम् । कुरुचमूमजयद्विजयो द्रुतं मुनिवरं तमहं सततं भजे ॥ ६ ॥ समरवृत्तविबोधसमीहया कुरुवरेण मुदा कृतयाचनः । सपदि सूतमदादमलेक्षणं मुनिवरं तमहं सततं भजे ॥ ७ ॥ वननिवासपरौ कुरुदंपती सुतशुचा तपसा च विकर्षितौ । मृततनूजगणं समदर्शयन्मुनिवरं तमहं सततं भजे ॥ ८ ॥ व्यासाष्टकमिदं पुण्यं ब्रह्मानन्देन कीर्तितम् । यः पठेन्मनुजो नित्यं स भवेच्छास्त्रपारगः ॥ ९ ॥

इति श्रीपरमहंसस्वामिब्रह्मानन्दविरचितं
श्रीवेदव्यासाष्टकं सम्पूर्णम्

---

## ९. अभिलाषाष्टकम्

श्रीगणेशाय नमः ॥ कदा पक्षींद्रांसोपरि गतमजं कंजनयनं रमासंश्लिष्टांगं गगनरुचमापीतवसनम् । गदा शंखांभोजारिवरकरमालोक्यसुचिरं गमिष्यत्येतन्मे ननु सफलतां नेत्रयुगलम् ॥ १ ॥ कदा क्षीराब्धेरंतः सुरतरुवनांतर्मणिमय समासीनं पीठे जलधितनयालिंगिततनुम् । स्तुतं देवैर्नित्यं मुनिवरकदंबैरभिनुतं स्तवैः संस्तोष्यामि श्रुतिवचनगर्भैः सुरगुरुम् ॥ २ ॥ कदामामा-

भीतं भवजलधितस्तापसततं गता रागं गंगातटगिरिगुहावासस-
दनम् । लपंतं हे विष्णो सुरवर रमेशेति सततं समभ्येत्योदारं
कमलनयनो वक्ष्यति वचः ॥ ३ ॥ कदा मे हृत्पद्मे भ्रमर इव
पद्मे प्रतिवसन् सदा ध्यानाभ्यासादनिशमुपहूतोविभुरसौ । स्फुर-
ज्ज्योतिरूपोरविरिवरमासेव्यचरणो हरिष्यत्यज्ञानाज्जनितति-
मिरं तूर्णमखिलम् ॥ ४ ॥ कदा मे भोगाशा निबिडभवपाशादु-
परतं तपः शुद्धं बुद्धं गुरुवचनतोदैरचपलम् । मनोमौनं कृत्वा
हरिचरणयोश्चारु सुचिरं स्थितिंस्थाणुप्रायां भवभयहरां यास्यति
पराम् ॥ ५ ॥ कदा मे संरुद्धाखिलकरण जालस्य परितो जिता-
शेषप्राणानिलपरिकरस्य प्रजपतः । सदोंकारं चित्तं हरिपदसरोजे
धृतवतः । समेष्यत्युल्लासं मुहुरखिलरोमावलिरियम् ॥ ६ ॥ कदा-
प्रारब्धाते परिशिथिलतां गच्छति शनैः शरीरे चाक्षौघेऽप्युपरत
वति प्राणपवने । वदत्यूर्ध्वं शश्वन्मम वदनकंजे मुहुरहो करिष्य-
त्यावाहं हरिरिति पदं पावनतमम् ॥ ७ ॥ कदा हित्वा जीर्णां
त्वचमिव भुजङ्गस्तनुमिमां चतुर्बाहुश्चक्रांबुजदरकरः पीतव-
सनः । घनश्यामो दूतैर्गगनगतिनीतो नतिपरैर्गमिष्यामिष्टस्यां-
तिकमखिलदुःखांतकमत ॥ ८ ॥

इति श्रीमत्परमहंसस्वामिब्रह्मानंदविरचित-
मभिलाषाष्टकं संपूर्णम्

## १०. चतुःश्लोकी भागवतम्

श्रीगणेशाय नमः ॥ श्रीभगवानुवाच ॥ ज्ञानं परम गुह्यम मे
यद्विज्ञानसमन्वितम् । सरहस्यं तदङ्गं च गृहाण गदितं मया॥१॥
यावानहं यथाभावो यद्रूपगुणकर्मकः । तथैव तत्त्वविज्ञानमस्तु ते
मदनुग्रहात् ॥२॥ अहमेवासमेवाग्रे नान्यद्यत्सदसत्परम् । पश्चा-
दहं यदतच्च योऽवशिष्येत सोऽस्म्यहम् ॥३॥ ऋतेऽर्थं यत्प्रतीयेत न
प्रतीयेत चात्मने । तद्विद्यादात्मनो मायां यथाभासो यथा तमः
॥ ४ ॥ यथा महांते भूतानि भूतेषूच्चावचेष्वनु । प्रविष्टान्य-

प्रविष्टानि तथा तेषु न तेष्वहम् ॥ ५ ॥ एतावदेवजिज्ञास्यं तत्त्वजिज्ञासुनाऽऽत्मनः । अन्वयव्यतिरेकाभ्यां यत्स्यात्सर्वत्र सर्वदा ॥ ६ ॥ एतन्मतं समातिष्ठ परमेण समाधिना । भवान् कल्पविकल्पेषु न विमुह्यति कर्हिचित् ॥ ७ ॥

इति श्रीमद्भागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां वैयासिक्यां द्वितीयस्कंधे भगवद्ब्रह्मसंवादे चतुःश्लोकीभागवतं समाप्तम्

## ११. सप्तश्लोकी गीता

श्रीगणेशाय नमः ॥ ओमित्यकाक्षरं ब्रह्म व्याहरन् मामनुस्मरम्। यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥ १ ॥ स्थाने हृषीकेशः तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च । रक्षांसि भीतानि दिशो द्रवंति सर्वे नमस्यंति च सिद्धसंघाः ॥ २ ॥ सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् । सर्वतः श्रुतिमल्लोके सर्वमावृत्यतिष्ठति ॥ ३ ॥ कविं पुराणमनुशासितारमणोरणीयां समनुस्मरेद्यः । सर्वस्य धातारमचिंत्यरूपमादित्यवर्णं तमसः परस्तात् ॥ ४ ॥ ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् । छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ ५ ॥ सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिज्ञानमपोहनं च। वेदैश्च सर्वैरहमेव वेद्यो वेदांतकृद्वेदविदेव चाहम् ॥६॥ मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मामवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ७ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे सप्तश्लोकी गीता सम्पूर्णा

## १२. हयग्रीवपटलम्

श्रीगणेशाय नमः ॥ हयशिरः पदं ङेंतंहृदयं च समुद्धरेत् । स्वबीजादिर्महामंत्रश्चतुर्वर्गफलप्रदः ॥ अस्य हयग्रीवाष्टाक्षरमं

त्रस्य ब्रह्मा ऋषिरनुष्टुपछन्दः श्रीहयग्रीवरूपी विष्णुर्देवता ममाभीष्टकामनासिद्ध्यर्थे जपे विनियोगः ॥ ब्रह्मणे ऋषये नमः शिरसि। अनुष्टुपछन्दसेनमो मुखे। श्रीहयग्रीवरूपिण्यै विष्णुदेवतायै नमो हृदि। अथ कराङ्गन्यासौ। ह्रां अंगुष्ठाभ्यां नमः। ह्रीं तर्जनीभ्यां नमः। ह्रूं मध्यमाभ्यां नमः। ह्रैं अनामिकाभ्यां नमः। ह्रौं कनिष्ठिकाभ्यां नमः। ह्रः करतलकरपृष्ठाभ्यां नमः। एवं हृदयादि। ततो ध्यानम्। शरच्छशांकप्रभमश्ववक्त्रमुक्तामयैराभरणैःप्रदीप्तम्। रथाङ्गशङ्खौ धृतवाहयुग्मं विद्याख्यमुद्रान्यकरं नमामि ॥ एवं ध्यात्वा मानसैः संपूज्य शङ्खस्थापनं कृत्वा पीठपूजां विधाय तद्यथा मूलाधारे ओं मं मण्डूकायनमः स्वाधिष्ठाने ओंकालाग्निरुद्राय० नाभौ ओंप्रकृत्यै० हृदि ओं ह्रीं आधार शक्त्यै० कूर्माय० अनंताय० वाराहाय० पृथिव्यै० सुधासिंधवे० नवरत्नद्वीपाय० जातवनाय तन्मध्ये मणिमण्डपाय तन्मध्ये कल्पवृक्षाय० तदधो रत्नवेदिकायै० तदुपरि स्वसिंहासनाय० तदुपरिश्वेतातपत्राय० सितचामराभ्यां० तालवन्ताभ्यां० विमलादर्शाय० ततो मुखपार्श्वनाभिवामपार्श्वेषु धर्मज्ञानवैराग्यैश्वर्यान् दक्षिणांशतदूर्वामोरुतदंशेषु अधर्माज्ञानावैराग्यानैश्वर्यान् अनंताय० सर्वतत्त्वाय० पद्माय० आनन्दकन्दाय० संविन्नालाय० प्रकृतिमयपत्रेभ्यो० विकारमयकेसरेभ्यो० पञ्चाशद्वर्णबीजाढ्यकर्णिकायै अं अर्कमण्डलाय द्वादशकलात्मने ओं सोममण्डलाय षोडशकलात्मने० वं वह्निमण्डलाय मण्डलात्मने० सं सत्त्वाय० रं रजसे० तं तमसे० आं आत्मने अं अन्तरात्मने० पं परमात्मने० ह्रीं० ज्ञानात्मने पीठशक्तिन्यसेत्। केसरेषु मध्ये च पूर्वादिक्रमेण ओं विमलायै० नमः। एवम् उत्कर्षिण्यै० ज्ञानायै० क्रियायै० योगायै० प्रह्व्यै० सत्यायै० ईशानायै० अनुग्रहायै० तदुपरि ओंनमोभगवतेविष्णवे सर्वभूतात्मने वासुदेवाय सर्वात्मसंयोगयोगपीठात्मने नमः। इति पीठपूजां त्वा पुनर्ध्यात्वाऽऽवाहनादिपञ्च-

पुष्पाञ्जलिदानपर्यंतं पूजां विधायावरणपूजामारभेत् । तत्रांगैः प्रथमावरणम् ॥ प्रज्ञाहय० मेधाहय० स्मृतिहय० विद्याहय० लक्ष्मीहय० वागीशहय० विद्याविशालहय० नादविमर्दहयग्रीवाय नमः इत्यष्टभिर्द्वितीयम् ॥ लक्ष्मीसरस्वतीरति-प्रीति-कीर्ति-कांति तुष्टि पुष्टिभिस्तृतीयम् । कुमुदादिभिर्गजैश्चतुर्थम् इन्द्रादिभिः पञ्चमम् ॥ ततो धूपादिविसर्जनांतं कर्म समापयेत् । अन्यपुरश्चरणं चतुर्लक्षं जपः । तथाच-वेदलक्षं जपेन्मन्त्रं दशांशं जुहुयात्ततः॥ आज्येन तद्दशांशहोमः ॥

इति हयग्रीवपटलं समाप्तम्

## १३. हयग्रीवकवचम्

श्रीराधाकृष्णाभ्यां नमः ॥ पार्वत्युवाच । देवदेव महादेव करुणाकर शंकर । त्वया प्रसादशीलेनकथितानि रमापतेः ॥ ॥ १ ॥ बहूनामवताराणां बहूनि कवचानि च ॥ इदानीं श्रोतु०-मिच्छामि हयास्यकवचं प्रभो ॥ २ ॥ शंकर उवाच ॥ देवि प्रियंवदे तुभ्यं रहस्यमपि तत्प्रिये । कलशांबुधिपीयूष हयास्य-कवचं वदे ॥ ३ ॥ महाकल्पांतयामिन्याश्चरमप्रहरे स्वयम् । लीलया हयवक्त्रोत्थं रूपमाधाय योऽरमत् ॥४॥ तेन यद्धयशीर्षेणत्रयीरक्षणकांक्षया । वेदोपदशः प्राक्काले उपदिष्टो विरंचये ॥ ५ ॥ पुत्रवान्स ततो मह्यं विरंचिरुपदिष्टवान् । कवचंहयशीर्षस्य ततुभ्यं कथयाम्यहम् ॥ ६ ॥ हयास्यकवचस्यास्य ऋषिर्ब्रह्मा प्रकीर्तितः । छंदोऽनुष्टुप् तथादेवो हयग्रीव उदाहृतः ॥७॥ ह्रौं तु बीजं समाख्यातं ह्रीं शक्तिः समुदाहृता । ॐ कीलकं समाख्यातमुच्चैरुत् कीलकं तथा ॥८॥ लक्ष्मीकरांभोरुहहेम-कुंभपीयूषपूरैरभिषिक्तशीर्षम् । व्याख्यानमालांबुजपुस्तकानि हस्तैर्वहन्तं हयतुंडमीडे ॥ ९ ॥ सुधासिक्तः शिरः पातुभालं पातु शशिप्रभः । दृशौ रक्षतु दैत्यारिर्नासां वोद्धृतवारिधिः ॥ १० ॥ श्रोत्रं पातु स्थिरश्रोत्रः कपोलौ करुणानिधिः । मुखं पातु गिरांस्वामी

जिह्वां पातुसुरारिहत् ॥ ११ ॥ हनुं हनुमता सेव्यः कण्ठं वैकुण्ठ-नायकः । ग्रीवा हयग्रीवो हृदयं कमलालयः ॥ १२ ॥ ऊर्ध्वं च विश्वभृत्पातु नाभिं पंकजलोचनः । मेढ्रं प्रजापतिः पातु ऊरू पातु गदाधरः ॥ १३ ॥ जानुनी विश्वहृत् पातु जंघे तु जगतां पतिः । गुल्फौ पातु हयध्वंसी पादौ विज्ञानवारिधिः ॥१४॥ प्राच्यां रक्षतु वागीशो दक्षिणायां वरायुधः । प्रतीच्यां विश्वभृत्-पातु कौबेर्यां शिववंदितः ॥ १५ ॥ ऊर्ध्वंपातु हरिः साक्षादधः पातु गुणाकरः । अन्तरिक्षे हरिः पातुः विश्वतः पातु विश्वधृक् ॥ १६ ॥ पुराणः कवचं धीमान् संनह्येन्निजविग्रहे । दुर्गवाक्-शरव्यूहैः स कदाचिचन्न बाध्यते ॥ १७ ॥ जपेद्य एतत्कवचं त्रिसंध्यं भक्तिभावतः । मूढोऽपि गीष्पतिस्पर्द्धी जायते नात्र संशयः ॥ १८ ॥

इति श्रीहयग्रीवसंहितायां हयग्रीवकवचम्

---

## १४. हयग्रीवाष्टोत्तरशतनामस्तोत्रम्

श्रीहयग्रीवाय नमः । हयग्रीवो महाविष्णुः केशवो मधुसूदनः गोविंदः पुडरीकाक्षो विष्णुर्विश्वंभरो हरिः ॥ १ ॥ आदीशः सर्ववागीशः सर्वाधारः सनातनः। निराधारो निराकारो निरीशो निरुपद्रवः ॥ २ ॥ निरंजनो निष्कलंको नित्यतृप्तो निरामयः । चिदानन्दमयः साक्षी शरण्यः शुभदायकः ॥ ३ ॥ श्रीमान् लोकत्रयाधीशः शिवः सरस्वतीप्रदः । वेदोद्धर्तावेदनिधिर्वेदवेद्यः पुरातनः ॥ ४ ॥ पूर्णः पूरयिता पुण्यः पुण्यकीर्तिः परात्परः । परमात्मा परंज्योति परेशः पारगः परः ॥ ५ ॥ सकलोपनिषद्-वेद्यो निष्फलः सर्वशास्त्रकृत् । अक्षमालाज्ञानमुद्रायुक्तहस्तो वरप्रदः ॥ ६ ॥ पुराणपुरुषः श्रेष्ठः शरण्यः परमेश्वरः । शांतो दांतो जितक्रोधो जितमित्रो जगन्मयः ॥७॥ जरामृत्युहरो जीवो जयदो गरुडासनः । जयश्रियोर्जितः स्तुत्यो जापकप्रियकृद्विभुः ॥ ८ ॥ विमलो विश्वरूपश्च विश्वगोप्ता विराट् स्वराट् । शुद्ध-

स्फटिकसंकाशो जटामंडलसंयुतः । ॥ ९ ॥ आदिमध्यांतरहितः सर्ववागीश्वरेश्वरः । नाम्नामष्टोत्तरशतं हयग्रीवमस्य यः पठेत् ॥ १० ॥ ससर्ववेदवेदांगशास्त्राणां पारगः कविः । इदमष्टोत्तर शतं नित्यं मूढोऽपि यः पठेत् ॥ ११ ॥ वाचस्पतिसमो बुद्ध्या सर्वविद्याविशारदः । महदैश्वर्यमासाद्य कलत्राणि च पुत्रकान् ॥ १२ ॥ अवाप्य सकलान् भोगान अन्ते हरिपुरं व्रजेत् ॥१३॥

इति श्रीब्रह्मांडपुराणे हयग्रीवाष्टोत्तरशतनामस्तोत्रं संपूर्णम्

## १५. करुणस्तोत्रम्

क्षान्तानि तानि निखिलानि महान्ति नूनमागांसि मे प्रणतपालनतत्परेण । यत्तेन नाथ भवतो विमुखत्वरूपमागोऽपि हन्त विकलस्य मम क्षमस्व ॥ १ ॥ यन्नाथ हन्त सततं विपदाकुलेन त्वत्पादयोः प्रणमनं न मया व्यधायि । विस्मृत्य सम्प्रति चिराय ममैतदागस्तां सन्निधेहि करुणां मयि दीनबन्धो ॥ २ ॥ निर्व्याजमार्त्तपरिपालनदीक्षितत्वं पाप्मान्तकृत्त्वमचिराच्च समं निकामम् । कार्या तथाऽपि विनते नतिमात्रतःस्राक् सन्तुष्यता मयि दयैव विभो त्वयाऽद्य ॥ ३ ॥ सर्वेषु पातकपरेषु परं प्रसिद्धं मां त्रास्यसे यदि शरण्य तदैव नाथ । पापीयसामपि सकृच्छरणं गतानामुद्धारदीक्षिततया प्रथितोऽसि भावी ॥ ४ ॥ के नाम पातककृतो भवताऽद्य यावन् नैवोद्धृता यदि गतः शरणं कदाचित् । किंत्वेषु हन्त महितस्य दयानिधे मे सन्तारणावसर एष यशोऽभिलाषिन् ॥ ५ ॥ विश्वम्भरस्य करुणावरुणालयस्य सर्वेश्वरस्य महितस्य यशस्विनां ते । आर्त्तेष्वनन्यशरणेषु न नाथ सम्प्रत्येवंविधत्वमुचितं बत मादृशेषु ॥ ६ ॥ त्वत्सम्मुखे विलपतामपि मादृशानामार्त्तिं निहत्य न यतः शिवमादधासि । हा दीनबन्धुरपि सन् भगवन् विभो त्वमन्धोऽसि हन्त बधिरोऽसि जडोऽसि किंवा ॥ ७ ॥ हा नाथ दीनजनतैकशरण्य हन्त किं नाम मां स्वशरणं परिपासि नाद्य । को वाऽखिलेषुभुवनेषु मदन्य आर्त्तो यं

नन्दयन् वितरितासि निजामभिख्याम् ॥ ८ ॥ कर्मानुसारिफलदानविधौ समर्थैरन्यैर्दयालुभिरपि त्रिदशैर्हतानाम् । नाथ त्वमेवशरणं ननु मादृशानां सर्वेश्वरश्च करुणश्च न यत् परोऽस्ति ॥९॥ किं नाम मां न परिपासि दयाविधान किं हन्त वा त्वमपि कर्ममुखप्रतीक्षः । चेदेवमेव बत तर्हि चिराय लोके निर्व्याजपालनपरत्वमपाकृतं स्यात् ॥१०॥ नानाविधानि वृजिनानि मया महान्तिकामं कृतानि यदिपि त्रिदशाधिनाथ । श्रीमन्नथापि शरणागतवत्सलत्वसम्भावनाय परिपाहि समाश्रितम्माम् ॥ ११ ॥ मामन्तरेण भुवनेष्वखिलेषु कश्चिन् नैतस्य हन्त पतितस्य समाश्रयोऽन्यः । इत्येव नाथ परिपाहि दयानिधान कर्माणि विस्मर चिराय कृतागसोऽपि ॥१२॥ आर्त्तो न कुत्रचन कश्चन ते मदन्यस्तादृग्जनार्त्तिहरणे च परः परस्त्वत् । सम्प्रत्यथापि भगवन् किमु मां न पासिकिं वा न पश्यसि चिराय यशोमहत्त्वम् ॥ १३ ॥ त्वामाश्रितोऽहमिति नाथ ! परं निशम्य पापीयसोऽपि बत ! नः परिपासि सद्यः । तस्मात्त्वमेव भुवनेष्वखिलेषु विष्वङ् मुख्यो मतोऽसि शरणागतवत्सलानाम् ॥ १४ ॥ त्वामाश्रितोऽस्मि परिपालय दीनबन्धो इत्येव दुष्कृतवतामपि मादृशानाम् । आकर्ण्य जातु परदेवनमीश सद्यो रक्षस्त्वमेव महितः करुणाकरेषु ॥ १५ ॥ अग्रेसरा यदपि दारुणदुष्कृतानि सन्तन्वतां ध्रुवमयी तदपि प्रपन्नाः । इत्येव मादृशजनान् परिपासि यत्त्वं विष्वक् तदेव भगवन् प्रथितः शरण्यः ॥१६॥ त्राणोचितानि सुकृतानि किमस्य कामं दंडचानि किन्तु दुरितान्यथवेति नाथ चेच्चिन्तयेः पतितपावन मादृशानामभ्यर्थना तव च वत्सलता मृषैव ॥ १७ ॥ यद्यप्यतीव पतितोऽस्मि दयानिधान सम्प्रत्यथापि भवतः शरणं प्रपन्नः । तस्माच्छरण्य भवता परिरक्षणीयो जानेऽन्यथा मम कदाऽपि न रक्षणं स्यात् ॥१८॥ कुत्रापि हन्त पतितो न मतो मदन्यः सत्यं तथाऽपि भवतः शरणं प्रपन्नः । एवं स्थितो मम निराकरणं चिराय

संरक्षणं सपदि वा बत नाथ युक्तम् ॥ १९ ॥ भुक्तानि पातकफलानि चिराद् बहूनि नेतः परं किमपि भोक्तुमहं समर्थः । त्वं दीनबन्धुरिति नाथ जगत्सु विष्वक् ख्यातोऽसि यत् पतितपावन पाहि तस्मात् ॥ २० ॥ मृत्योः करालवदने पतितोऽहमद्य यावत् प्रकाममरेश विधेरधीनः । अप्येत्य हन्त ! भवतोऽभिमुखं कथञ्चिद् यद्यद्य शर्म्म न लभेय ततो यशः किम् ॥२१॥ अन्याश्रितो यदि विभो ! यदि वा निरागाः स्यान्निर्भयो जगति हन्त ! भवादृशानाम् । किं तेन किञ्चिदुदितं करुणानिधित्वं किंवा महत्सु महिमा महितोऽशतोऽपि ॥ २२ ॥ कुर्वन्ननाथपतितोद्धरणं समन्ताल्लोके महत्त्वमुपयाति दयानिधीनाम् । मामुद्धरिष्यसि न तद् यदि नाथ सद्यः किं हन्त ! तर्हि महिमा विमलस्त्वदीयः ॥ २३ ॥ यन्मादृशानपि सुदुष्कृतिनोतिदीनान् मत्वा समुद्धरसि मङ्क्षु समन्ततस्त्वम् । तद् दीन बन्धुरिति नाम तव त्रिलोक्यां स्थाने शरण्य भगवन् नितरां प्रसिद्धम् ॥ २४ ॥ विश्वम्भरोऽसि यदि मामपि तद्विभर्षि साहाय्यमाचरसि मे यदि दीनबन्धुः । यत पावनस्तदिति नाथ पुनासि नेदं चित्रं स्वनाममहिमानमुशन्ति सर्वे ॥ २५ ॥ यद्यागमिष्यमघहन् शरणं तवाहं त्वं नाथ यद्यदहहरिष्य इमं शरण्य ॥ उद्धृत्य सम्प्रति यशो लभसे स्म यादृक् किं तादृशं कथय नाथ ततोऽन्यथाऽपि ॥ २६ ॥ सत्यं यदि त्वमसि माधव दीनबन्धुं किम्मां कदर्थयसि हन्त ! पुनः पुनस्तत । एवं विलापिनि जने कृपणोऽपि सद्यः सम्पद्य साधु मृदुतां करुणां तनोति ॥ २७ ॥ यावत् समं करुणया पररक्षकत्वं साधारणोऽपि भजते यदि कीर्तिलिप्सुः । विश्वम्भरत्वमहितः पुरेतमेवं व्यापादयस्यहह तत्त्वमिव त्वमेव ॥ २८ ॥ सर्वेऽप्यमी तव वशे जगदीशितारः पुंसां शुभाशुभविधौ प्रभवो भवंति । तस्मात्त्वमेव बत तत्तदपाकृतस्य मादृग्जनस्य शरणैषिण आश्रयोऽसि ॥२९॥ पायात्यदि त्वमपि नाथ न पीड्यमानं तैस्तैः परस्य चरितैकदृशां

प्रसिद्धैः । लोकः शरण्य शरणं बत कस्य यायात् को वा भवेत् पतितपावन दीनबन्धुः ॥ ३० ॥ व्याधादयोऽपि भगवन् विहिता-पराधाः संतारिताः सपदि हन्त यदा दयालो । एकाकिनं पुनरिमं परिपीडयंस्त्वं तत्तां निजां किमु निराकुरुषे चिरं न ॥ ३१ ॥ दीनोऽस्मि दीनदयितोऽसि सुदुःखितोस्मि दुखान्तकस्त्वमसि नाथ सुदुःखितानाम् । पाप्मास्मि पावनकृतां प्रथमोऽसि नित्यं तन्मां प्रभो झटिति पालय पावयाद्य ॥ ३२ ॥ कर्म्मानुसारमशुभं च शुभं च भोग्यं सर्वस्य दैवनियतं जगतो न चित्रम् । भूयोऽपि भोः पतितपावन नाम यत्ते तन्मां पुनीहि च कृतार्थय तामभिख्याम् ॥ ३३ ॥ सर्वार्थपूर्त्तिकरणे बहवः प्रसिद्धाः कल्पद्रुमप्रभृतयः शरणागतानाम् । हे नाथ यद्यथ बिभर्षि पराङ्मुखांस्त्वमेतादृशां-स्तदसि सत्यमनुग्रहीता ॥ ३४ ॥ नाथ त्वमेव यदि सर्वं जगन्मयस्त-न्मां पीडयन् किमु न पीडयसि स्वमद्य । चेत्त्वं पुनर्बत जगद्गत एव कश्चित्किं तर्हि भोस्तदपि कर्मभुजः शुभेच्छा ॥ ३५ ॥ विश्वं समुद्धरसि सर्वमपि त्वमीश तन्मां समुद्धरसि किं न दयानिधान । विश्वंभर त्वमपि कर्ममुखप्रतीक्षस्तत् किं प्रभुत्वमनुकंपविधौ त्वदीयम् ॥ ३६ ॥

इति श्रीशिवदत्तकविरत्नप्रणीतं करुणस्तोत्रम्

---

## १६. महामारीस्तोत्रम्

श्रीगणेशाय नमः ॥ देव्युवाच । पुरा ब्रह्म तु मां स्पृष्ट्वा समाहूयाब्रवीद्वचः । शृणु मे वचनं पुत्रि कुरुष्वाद्याथ सादरम् ॥ १ ॥ कलौ जना दुराचारा राजानश्च तथा विधाः । अतो गत्वा भुवं देवि मृत्युरूपा भवाशु च ॥ २ ॥ परद्रव्यापहर्तारः परस्त्रीनिरताः सदा । देवस्वहरणे सक्ता ब्रह्मस्वहरणे नृप ॥ ३ ॥ तेषां दोषवशात्त्वं तु जनान् संहर नित्यशः ॥ ब्रह्मणैवं समादिष्टा इन्द्राद्यैः सुरसत्तमैः ॥ ४ ॥ भुवं समागता तत्र जनाञ्ज्ञात्वाऽथ पापिनः ॥ राज्ञो दोषान् पुरस्कृत्य ग्रामे ग्रामे वसाम्यहम् ॥ तत्रापि

पापिनो हत्वा पुनर्ग्रामान्तरं भजे ॥ ५ ॥ एवं देशानटित्वाऽहं सर्वान्संहृत्य वै जनान् । पुनर्गच्छामि सदनं ब्रह्मणः परमेष्ठिनः ॥ ६ ॥ एवं मदागमं ज्ञात्वा बुद्धिमान्पुण्यकृन्नरः । विचार्य शास्त्रतो नित्यं जागरूको भवेदलम् ॥ ७ ॥ पतन्ति मूषिका यत्र नृत्यन्ति विरमन्ति च । तद्गृहं तत्क्षणं त्यक्त्वा सकुटुम्बो वने विशेत् ॥ ८ ॥ तत्र शान्ति प्रकुर्वीत महादेव्याः समीरिताम् । जपित्वा च महामन्त्रं पठित्वा स्तोत्रमुत्तमम् ॥ ९ ॥ ॐ नमो भगवति महामारिके मृत्युरूपिणि सकुटुम्बं मामव स्वाहा । वने जलाशयं गत्वा ऊर्ध्वबाहुरधोमुखः । वीरासने चोपविश्य जपेन्मंत्रं सहस्रशः ॥ १० ॥ संस्थाप्य प्रतिमां तत्र धूपदीपोपहारकैः । संपूज्य विधिवत्पश्चाज्जुहुयात्प्रत्यहं नरः ॥ ११ ॥ हरिद्राचूर्णमिश्रेण चित्रान्नेनैव संयुतः । समिद्भिः खादिरैर्भक्त्या ब्राह्मणैश्च समन्वितः ॥ १२ ॥ पत्नीपुत्रात्मभृत्यैश्च जुहुयादनुवासरम् । होमान्ते च पठेन्नित्यं स्तोत्रमेतज्जितेन्द्रियः ॥ १३ ॥ नमो देवि महादेवि सर्वशोकवशंकरी । सर्वदा सर्वतो मह्यं कृपां कुरु कृपा मयि ॥१४॥ मेरौ कैलासशिखरे हेमाद्रौ गन्धमादने । नित्यप्रियकृतावासे मद्यमांसबलिप्रिये ॥ १५ ॥ महासैन्यसमायुक्ते सर्वप्राणिविहिंसके । सर्वाभिचारिके देवि सर्वं त्वं रक्ष सर्वदा ॥ १६ ॥ यत्र कुत्र स्थले वापि यस्मिन् कस्मिन् यदा तदा । रक्ष मां रक्ष मां देवि सपुत्रपशुभृत्यकम् ॥ १७ ॥ माङ्गल्यं मङ्गलं देहि महामङ्गलदायिनि । लोकानामभये सर्वमङ्गले मङ्गलप्रिये ॥ १८ ॥ इति स्तुत्वा महादेवीं भक्तिभावेन संयुतः ॥ भुञ्जीत स्वजनैर्युक्तो देवीं तां मनसा स्मरन् ॥ १९ ॥ यदास्वगृहचैत्येषु ध्वांक्षरावो भविष्यति ॥ काकशान्ति ततः कृत्वा गृहं गन्तुमुपक्रमेत् ॥२०॥ सुमुहूर्ते सुनक्षत्रे स्वलंकृत्य ततो गृहम् । ब्राह्मणैर्बन्धुभिः सार्धं संविशेद्गृहमात्मनः ॥ २१ ॥ स्वस्तिवाचनविप्रेभ्यः शांतिसूक्तोक्तिपूर्वकम् । दक्षिणां च हिरण्यादिं दद्याच्छा-

ठ्यविवर्जितः ॥ २२ ॥ ब्राह्मणान्भोजयित्वा च देवीं तां प्रार्थयेद् गृहे । गच्छ गच्छ महादेवि स्वस्थानं मङ्गलं कुरु ॥ २३ ॥ एवं कृत्यविधानेन मारिकाशान्तिरुत्तमा । जायते नात्र संदेहः सत्यं सत्यं समीरितम् ॥ २४ ॥ इत्येतत्कथितं देव्या देवेभ्यः स्वात्मसंभवम् । माहात्म्यं पठितं येन सोऽपि माङ्गल्यमाप्नुयात् ॥२५॥ लिखितं पुस्तकं यस्य गृहे तिष्ठति सर्वदा । तस्य मारीभयं नास्ति-सत्यं सत्यं मयोदितम् ॥ २६ ॥ पुस्तकं पूजयेद्यस्तु श्रद्धया परया मुदा । सोऽपि माङ्गल्यमाप्नोति इहामुत्र परां गतिम् ॥२७॥ सर्वं त्यक्त्वा साधयेत देवीं यत्नर्धनैरपि । स्तोष्यन्ति परया भक्त्या सर्वकामार्थसिद्धये ॥ २८ ॥ बिडाला यत्र नश्यन्ति यत्र नश्यन्ति मूषिकाः स्थानं तत्र परित्यज्य स्थानशून्यं च कारयेत् ॥ २९ ॥

इति श्रीदेवीपुराणे महामारिकास्तोत्रं सम्पूर्णम्

---

## १७. मृतसंजीवनकवचम्

श्रीगणेशाय नमः ॥ एवमाराध्य गौरीशं देवं मृत्युंजयेश्वरम् मृतसंजीवनं नाम्ना कवचं प्रजपेत्सदा ॥१॥ सारात्सारतरं पुण्यं गुह्याद् गुह्यतरं शुभम् । महादेवस्य कवचं मृतसंजीवनामकम् ॥२॥ समाहितमनो भूत्वा शृणुष्व कवचं शुभम् । श्रुत्वैतद्दिव्यकवचं रहस्यं कुरु सर्वदा ॥ ३ ॥ वराभयकरोयज्वा सर्वदेवनिषेवितः । मृत्युं जयो महादेवः प्राच्यां मां पातु सर्वदा ॥ ४ ॥ दधानः शक्तिमभयां त्रिमुखः षड्भुजः प्रभुः । सदाशिवोऽग्निरूपी मामाग्नेय्यां पातु सर्वदा ॥ ५ ॥ अष्टादशभुजोपेतो दण्डाभयकरो विभुः । यमरूपी महादेव दक्षिणस्यां सदाऽवतु ॥ ६ ॥ खड्गाभयकरो धीरो रक्षोगणनिषेवितः । रक्षोरूपी महेशो मां नैर्ऋत्यां सर्वदाऽवतु ॥ ७ ॥ पाशाभयभुजः सर्वरत्नाकरनिषेवितः । वरुणात्मा महादेवः पश्चिमे मां सदाऽवतु ॥ ८ ॥ गदाभयकरः प्राणनायकः सर्वदागतिः । वायव्यां मारुतात्मा मां शंकरः पातु

सर्वदा ॥ ९ ॥ शङ्खाभयकरस्थो मां नायकः परमेश्वरः । सर्वा-
त्मान्तरदिग्भागे पातु मां शंकरः प्रभुः ॥ १० ॥ शूलाभयकरः
सर्वविद्यानामधिनायकः । ईशानात्मा तथैशान्यां पातु मां परमे-
श्वरः ॥ ११ ॥ ऊर्ध्वभागे ब्रह्मरूपी विश्वात्माऽधः सदाऽवतु ।
शिरो मे शंकरः पातुः ललाटं चन्द्रशेखरः ॥ १२ ॥ भ्रूमध्यं सर्व-
लोकेशस्त्रिनेत्रो लोचनेऽवतु भ्रूयुग्मं । गिरिशः पातु कर्णौ पातु
महेश्वरः ॥ १३ ॥ नासिकां मे महादेव ओष्ठौ पातु वृषध्वजः ।
जिह्वां मे दक्षिणामूर्तिर्दन्तान्मे गिरिशोऽवतु ॥ १४ ॥ मृत्यंजयो
मुखं पातु कण्ठं मे नागभूषणः । पिनाकी मत्करौ पातु त्रिशूली
हृदयं मम ॥ १५ ॥ पञ्चवक्त्रः स्तनौ पातु उदरं जगदीश्वरः ।
नाभिं पातु विरूपाक्षः पार्श्वौ मे पार्वतीपतिः ॥ १६ ॥ कटिद्वयं
गिरीशो मे पृष्ठं मे प्रमथाधिपः ॥ गुह्यं महेश्वरः पातु ममोरू
पातु भैरवः ॥१७॥ जानुनी मे जगद्धर्ता जंघे मे जगदम्बिका ।
पादौ मे सततं पातु लोकवन्द्यः सदाशिवः ॥ १८ ॥ गिरीशः
पातु मे भार्यां भवः पातु सुतान्मम ॥ मृत्युंजयो ममायुष्यं चित्तं
गणनायकः ॥ १९ ॥ सर्वाङ्गं मे सदा पातु कालकालः सदा-
शिवः । एतत्ते कवचं पुण्यं देवतानां च दुर्लभम् ॥२०॥ मृतसंजी-
वनं नाम्ना महादेवेन कीर्तितम् । सहस्रावर्तनं चास्य पुरश्चरण
मीरितम् ॥ २१ ॥ यः पठेच्छृणुयान्नित्यं श्रावयेत्सुसमाहितः ।
स कालमृत्युं निर्जित्य सदायुष्यं समश्नुते ॥२२॥ हस्तेनवा यदा
स्पृष्ट्वा मृतं संजीवयत्यसौ । आधयो व्याधयस्तस्य न भवन्ति
कदाचन ॥ २३ ॥ कालमृत्युमपि प्राप्तमसौ जयति सर्वदा ।
अणिमादिगुणैश्वर्यं लभते मानवोत्तमः ॥ २४ ॥ युद्धारम्भे पठि-
त्वेदमष्टाविंशतिवारकम् । युद्धमध्ये स्थितः शत्रुः सद्यः सर्वैर्न
दृश्यते ॥ २५ ॥ न ब्रह्मादीनि चास्त्राणि क्षयं कुर्वन्ति तस्य वै ।
विजयं लभते देवयुद्धमध्येऽपि सर्वदा ॥२६॥ प्रातरुत्थाय सततं
यः पठेत्कवचं शुभम् । अक्षय्यं लभते सौख्यमिह लोके परत्र च ॥

॥ २७ ॥ सर्वव्याधिविनिर्मुक्तः सर्वरोगविवर्जितः । अजरामरणो भूत्वा सदा षोडशवार्षिकः ॥२८॥ विचरत्यखिलाँल्लोकान्प्राप्य भोगांश्च दुर्लभान् । तस्मादिदं महागोप्यं कवचं समुदाहृतम् ॥ २९ ॥ मृतसंजीवनं नाम्ना दैवतैरपि दुर्लभम् ॥३०॥

इति श्रीवसिष्ठप्रणीतं मृतसंजीवनस्तोत्रं सम्पूर्णम्

---

## १८. अश्विनीकुमारस्तोत्रम्

श्रीगणेशाय नमः ॥ प्रपूर्वगौ पूर्वजौ चित्रभानू गिरावां शंसामि तपसा ह्यनन्तौ । दिव्यौ सुपर्णौ विरजौ विमानावधिक्षिपन्तौ भुवनानि विश्वा ॥ १ ॥ हिरण्मयौ शकुनी सांपरायौ नासत्यदस्रौ सुनसौ वैजयन्तौ। शुक्लं वयन्तौ तरसा सुवेमावधिव्ययन्तावसितं विवस्वतः ॥२॥ ग्रस्तां सुपर्णस्य बलेन वर्तिकाममुञ्चतावश्विनौ सौभगाय। तावत्सुवृत्ता वनमन्तमायया वसत्तमा गा अरुणा उदावहत् ॥ ३ ॥ षष्टिश्च गावस्त्रिशताश्च धेनव एकं वत्सं सुवते तं दुहन्ति । नानागोष्ठा विहिता एकदोहनास्तावश्विनो दुहतो धर्ममुक्थ्यम् ॥ ४ ॥ एकां नाभिं सप्तशताअराश्रिताः प्रधिष्वन्या विंशतिरर्पिता अराः । अनेमिचक्रं परिवर्तेऽतेजरं मायाश्विनौ समनक्ति चर्षणी ॥ ५ ॥ एकं चक्रं वर्तते द्वादशारं षण्णाभिमेकाक्षममृतस्य धारणम् । यस्मिन्देवा अधिविश्वे विषक्तास्तावश्विनौ मुञ्चतो मा विषीदतम् ॥ ६ ॥ अश्विनाविन्दुममृतं वृत्तभूयौ तिरोधत्तामश्विनौ दासपत्नी । हित्वा गिरिमश्विनौ गामुदाचरन्तौ तद्वृष्टिमह्नात्प्रथितौ बलस्य ॥७॥ युवां दिशो जनयथो दशाग्रे समानं मूर्धन रथयानं वियन्ति। तासां यातमृषयोऽनुप्रयान्ति देवा मनुष्याः क्षितिमाचरन्ति ॥ ८ ॥ युवां वर्णान्विकुरुथो विश्वरूपांस्तेऽधिक्षियन्त भुवनानि विश्वा । ते भानवोऽप्यनुसृताश्चरन्ति देवा मनुष्याः क्षितिमाचरन्ति ॥ ९ ॥ तौ नासत्यावश्विनौ वां महेऽहं स्रजं च यां बिभृथः पुष्करस्य। तौ नासत्यावमृतावृतावृधावृते देवास्तत्प्रपदे न सूते ॥ ॥ १० ॥ मुखेन गर्भं लभतां युवानौ गतासुरेतत्प्रपदन सूते ।

सद्यो जातो मातरमत्ति गर्भस्तावश्विनौ मुञ्चथो जीवसे गाम् ॥ ११ ॥ स्तोतुं न शक्नोमि गणैर्भवन्तौ चक्षुर्विहीनः पथि संप्रमोहः । दुर्गेऽहमस्मिन्पतितोऽस्मि कूपे युवां शरण्यौ शरणं प्रपद्ये ॥ १२ ॥

इति श्रीमन्महाभारत आदिपर्वण्यश्विनीकुमारस्तोत्रं संपूर्णम्

## १९. पञ्चदेवतास्तोत्रम्

श्रीगणेशाय नमः ॥ गणेशविष्णुसूर्येशदुर्गाख्यं देवपञ्चकम् । वन्दे विशुद्धमनसा जनसायुज्यदायकम् ॥ १ ॥ एकरूपान् भिन्नमूर्तीन् पञ्चदेवान्नमस्कृतान् । वन्दे विशुद्धभावेनेशाम्बेनैकरदाच्युतान् ॥२॥ कल्याणदायिनो देवान्नमस्कार्यान्महौजसः । विष्णुशंभुशिवासूर्यगणेशाख्यान्नमाम्यहम् ॥ ३ ॥ एकात्मनो भिन्नरूपान् लोकरक्षणतत्परान् । शिवविष्णुशिवासूर्यहेरम्बान् प्रणमाम्यहम् ॥ ४ ॥ दिव्यरूपानेकरूपान्नानारूपान्नमस्कृतान् ।शिवाशंकरहेरम्बविष्णुसूर्यान्नमाम्यहम् ॥ ५ ॥ नित्यानानन्दसंदोह दायिनो दीनपालकान्। शिवाच्युतगणेशेनदुर्गाख्यान् नौम्यहं सुरान्। ॥६॥ कमनीयतनून्देवान् वसेवावश्यान् कृपावतः। शंकरनशिवाविष्णुगणेशाख्यान्नमाम्यहम् ॥७॥ सूर्यविष्णुशिवाशंभुविघ्नराजाभिधान्सुरान् । एकरूपान् सदा वन्दे सुखसंदोहसिद्धये ॥८॥ हरौ हरे तीक्ष्णकरे गणेशे शक्तौ न भेदो जगदादिहेतुषु। अधः पतन्त्येषु भिदां दधाना भाषान्त एवं यततोऽच्युताश्रमाः ॥ ९ ॥

इति श्रीमदच्युताश्रमविरचितं पञ्चदेवतास्तोत्रम् ॥ ११ ॥

सर्वस्तोत्रसंख्या २२४

पुस्तक मिलनेका ठिकाना–

खेमराज श्रीकृष्णदास,
"श्रीवेंकटेश्वर"–प्रेस,
खेतवाड़ी, बम्बई–४.

गंगाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेंकटेश्वर –प्रेस,
कल्याण—बम्बई.

मुद्रक व प्रकाशक: मे० खेमराज श्रीकृष्णदास, अध्यक्ष श्रीवेंकटेश्वर प्रेस, बंबई–४ के लिये डी० एस० शर्मा मैनेजर द्वारा श्रीवेंकटेश्वर प्रेस, खेतवाड़ी, बम्बई ४ में मुद्रित.

